# VIDURNÎTI

OR

# MORAL SAYINGS OF VIDURA

FROM

## THE MAHÂBHÂRATA

**With Explanatory Notes in Sanskrit.**

---

THIRD EDITION.

PUBLISHED BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF THE "NIRṆAYA-SÂGAR" PRESS,

Bombay.

1911.

*Price 6 Annas.*

लक्ष्मीधरेत्युपाह्वकृष्णशर्मात्मजन्मनः कृष्णस्येदं पुस्तकं

श्रीगणेशाय नमः ।

श्रीमहाभारतरत्नाकरान्तर्गतोद्योगपर्व-

सुधाबिंदुभूतम्

# विदुरनीतिनाम्नालोकप्रसिद्धम् ।

प्रजागरपर्व

सुबोधटिप्पनीभिः समेतम् ।

(तृतीयावृत्तिः)

मुम्बय्यां

तुकाराम जावजी

इत्येतैः कोलभाटवर्त्मनि २३ शे भवने स्वीये निर्णयसाग-
राख्यमुद्रणयन्त्रालये बालकृष्ण रामचंद्र घाणेकर-
द्वारा मुद्रयित्वा प्रकाशितम् ।

शकाब्दाः १८३३, सनाब्दा १९११.

मूल्यं षट् आणकाः ।

# PREFACE.



Now a days Sanskrit is studied in English Schools from the first and second book of Sanskrit, published by the Educational Department. These books indeed contain as much of grammar as is necessary, nay more, for practical purposes. But experience tells us that with all his knowledge of grammar a student, even of the seventh standard is much less able to make out the meaning of a new but simple S'loka than he who has gone through only five or six Sargas of any Kávya according to the old system of studying Sanskrit. The reason is plain. The student is not to be blamed. For, in proportion to his progress in grammar, his reading is confined only to the two books, and is not thus varied and extensive. A student of the English standard IV or V begins to read new books containing easy stories, and he finds many such written in a style suitable to his ability. Such however is not the case with the student of Sanskrit. After completing the two books he must read either the Hitopadesha, the Panchatantra or the Raghuvaṁsha all of them a little too difficult for him. The first two books contain easy passages indeed, but they do ( especially the second ) also contain in many places passages too difficult even for an advanced student. When a student begins to read any book with himself, he must find it interesting and what is still more necessary that he must be able to understand it a little so as to produce interest in reading, otherwise he becomes disgusted with it and leaves the reading. The stu-

dent of the fifth standard reads with interest some small easy English books, while the Sanskrit student reads under compulsion the two books, the only once that he can read and are accessible to him.

To remove this long felt difficulty, it has been thought abvisable to print and publish easy and interesting episodes from the Rámáyaṇa and the Mahábhárata with easy notes in Sanskrit at the foot of each page of the text and to sell them at cheap price that they may be within the reach of every student. The present book 'Viduranîti' is the first we offer to the public. Any new composition to meet this want would become harsh to the ear and fall too short to produce that sweet-ness of honeyed tongue of Valmiki and Vyàsa, so well-known to every reader of Sanskrit. The present book will be found useful to both classes of students, *viz.* those who study Sanskrit in the new as well as in the old way. The object of givining foot-notes in Sanskrit is that the learner may be accustomed to consult Sanskrit notes and then gradually to understand the commentaries on the Kávyas. As the Viduranîti contains the subject of morality and politics the book will no doubt, be acceptable to all. Some of its verses are master-pieces of their kind and were the student to commit them to memory, he will easily gain an exercise to his reasoning, a knowledge of worldly politics and promptness in the use of Sanskrit idiomatic expressions and dignified thoughts.

BOMBAY,
21*st April* 1886. } GOVIND S. SHASTRI BAPAT.




हल्लीं सरकारी इंग्रजी शाळांतून पहिल्या व दुसऱ्या संस्कृत पुस्तकावरून संस्कृतभाषेचा अभ्यास चालतो. साधारण व्युत्पत्तीस पुरे इतकें व्याकरण त्या पुस्तकांत आहे; तें विद्यार्थी शिकतात, तथापि जुन्या रीतीप्रमाणें व्याकरण न शिकतां काव्याचे चार पांच सर्ग ज्यानें पढले आहेत अशा विद्यार्थ्यास साधारण सोपा नवा श्लोक लावण्याचें जें सामर्थ्य येतें तें सातव्या इयत्तेंतील मुलांच्या आंगीं देखील नसतें हें पुष्कळांस माहित आहे. याचा दोष विद्यार्थ्यांकडे मुळींच नाहीं. कारण व्याकरणाच्या मानानें त्यांचें ग्रन्थवाचन होत नाहीं. इंग्रजी चवथी पांचवी इयत्ता झाली ह्मणजे साधारण सोपीं इंग्लिश पुस्तकें विद्यार्थी वाचूं लागतो, याचें कारण असें कीं त्याच्या योग्यतेप्रमाणें त्यास पुस्तकें वाचावयास मिळतात. संस्कृत शिकणारांचें तसें होत नाहीं. संस्कृत दोन पुस्तकें झाल्यावर हितोपदेश, पंचतंत्र, व रघुवंश हीं पुस्तकें वाचावयाचीं. हितोपदेश, पंचतंत्र, यांत कांहीं भाग सोपा आहे तरी कांहीं भाग फारच कठिण आहे. रघुवंश तर प्रारंभीं समजण्यास फारच अडचण पडते. विद्यार्थी नवें पुस्तक वाचूं लागला ह्मणजे पुढें वाचण्यास गोडी लागेल इतक्यापुरतें तरी त्यास तें समजलें पाहिजे, ह्मणजे तो तें तडीस नेतो, तसें न झालें तर कंटाळून टाकून देतो ही गोष्ट सर्वांस माहित आहे. इंग्रजी चवथी पांचवी इयत्ता शिकणाऱ्यास देखील पुढें इंग्रजी वाचण्याची जी गोडी लागते तशी सातव्या इयत्तेंतील पुष्कळ विद्यार्थ्यांस संस्कृत वाचण्याची लागत नाहीं. ते केवळ परीक्षा उतरण्याकरतां कंटाळ्यानें शिकतात. ही अडचण दूर व्हावी या हेतूनें चांगल्या विषयावरील सुलभ

भाषेनें लिहिलेलीं श्रीमहाभारत व वाल्मीकिरामायण यांतील सुरस उपाख्यानें सुलभ टीपांसहित अल्प किंमतीस विद्यार्थ्यांस मिळतील अशा रीतीनें छापण्याचा विचार करून प्रथमतः हें विदुरनीतीचें पुस्तक काढलें आहे. विद्यार्थ्यांस गोडी लागण्याकरतां नवीं सुलभ वाक्यें केलीं तरी तीं कर्णकटु होतात. व्यास, वाल्मीकि, यांच्या अमृतवाणीचें माधुर्य त्यांत येत नाहीं. याकरतां जुन्या व नव्या रीतीनें संस्कृत शिकणाऱ्यांस उपयोग व्हावा ह्मणून हा प्रयत्न केला आहे. परमेश्वरकृपेनें सफल झाल्यास चालू ठेवितां येईल. इंग्रजी लहान पुस्तकांतील सोप्या टीपा पहाण्याची विद्यार्थ्यांस संवय लागते तशी संस्कृत टीपा कळण्याची संवय लागण्याकरतां सुलभ भाषेनें टीपा दिल्या आहेत. यांतील विषयही नीतीपर असल्यामुळें सर्वांस मान्य होईल. कांहीं श्लोक तर असे आहेत कीं ते विद्यार्थ्यानें पाठ केले तर भाषाज्ञान, नीति, समयोचित सुभाषित, या गोष्टी सहज प्राप्त होतील.

मुंबई,
चैत्र शुद्ध १५
शके १८०८.

**गोविंद शंकरशास्त्री बापट.**

# विदुरनीतिः.

### वैशम्पायन उवाच

द्वाःस्थं प्राह महाप्राज्ञो धृतराष्ट्रो महीपतिः ।
विदुरं द्रष्टुमिच्छामि तमिहानय माचिरम् ॥ १ ॥
प्रहितो धृतराष्ट्रेण दूतः क्षत्तारमब्रवीत् ।
ईश्वरस्त्वां महाराजो महाप्राज्ञ दिदृक्षति ॥ २ ॥
एवमुक्तस्तु विदुरः प्राप्य राजनिवेशनम् ।
अब्रवीद्धृतराष्ट्राय द्वाःस्थ मां प्रतिवेदय ॥ ३ ॥

### द्वाःस्थ उवाच

विदुरोऽयमनुप्राप्तो राजेन्द्र तव शासनात् ।
द्रष्टुमिच्छति ते पादौ किं करोतु प्रशाधि माम् ॥ ४ ॥

### धृतराष्ट्र उवाच

प्रवेशय महाप्रज्ञं विदुरं दीर्घदर्शिनम् ।
अहं हि विदुरस्यास्य नाकल्पो[1] जातु[2] दर्शने ॥ ५ ॥

### द्वाःस्थ उवाच

प्रविशान्तःपुरं क्षत्त[3]र्महाराजस्य धीमतः ।
नहि ते दर्शनेऽकल्पो जातु राज्ञाब्रवीद्धि माम् ॥ ६ ॥

### वैशम्पायन उवाच

ततः प्रविश्य विदुरो धृतराष्ट्रनिवेशनम् ।
अब्रवीत्प्रांजलिर्वाक्यं चिंतयानं[4] नराधिपम् ॥ ७ ॥

---

१ अकल्पः असमर्थः. २ जातु कदाचित्. ३ शूद्रायां क्षत्रियादुत्पन्नः क्षत्ता. ४ चिन्तयन्तमित्यर्थः.

विदुरोहं महाप्राज्ञ संप्राप्तस्तव शासनात् ।
यदि किंचन कर्तव्यमयमस्मि प्रशाधि माम् ॥ ८ ॥

धृतराष्ट्र उवाच

संजयो विदुर प्राज्ञो गर्हयित्वा च मां गतः ।
अजातशत्रोः श्वो वाक्यं सभामध्ये स वक्ष्यति ॥ ९ ॥
तस्याद्य कुरुवीरस्य न विज्ञातं वचो मया ।
तन्मे दहति गात्राणि तदकार्षीत्प्रजागरम् ॥ १० ॥
जाग्रतो दह्यमानस्य श्रेयो यदनुपश्यसि ।
तद्ब्रूहि त्वं हि नस्तात धर्मार्थकुशलो ह्यसि ॥ ११ ॥
[1]यतः प्राप्तः संजयः पांडवेभ्यो न मे यथावन्मनसः प्रशांतिः ।
सर्वेंद्रियाण्यप्रकृतिं गतानि किं वक्ष्यतीत्येव मेऽद्य [2]प्रचिंता १२

विदुर उवाच

अभियुक्तं बलवता दुर्बलं हीनसाधनम् ।
हृतस्वं कामिनं चोरमाविशंति प्रजागराः ॥ १३ ॥
कच्चिदेतैर्महादोषैर्न स्पृष्टोऽसि नराधिप ।
कच्चिच्च परवित्तेषु [3]गृध्यन्न परितप्यसे ॥ १४ ॥

धृतराष्ट्र उवाच

श्रोतुमिच्छामि ते धर्म्यं परं नैःश्रेयसं वचः ।
अस्मिन्राजर्षिवंशे हि त्वमेकः प्राज्ञसंमतः ॥ १५ ॥

विदुर उवाच

राजा लक्षणसंपन्नस्त्रैलोक्यस्याधिपो भवेत् ।

---

१ यतः यदा प्राप्तस्तदारभ्य. २ प्रचिन्ता प्रकृष्टा चिन्ता.
३ लिप्सावान्.

प्रेष्यस्ते प्रेषितश्चैव धृतराष्ट्र युधिष्ठिरः ॥ १६ ॥
विपरीततरश्च[2] त्वं भागधेये[3] न संमतः ।
अर्चिषां[4] प्रक्षयाच्चैव धर्मात्मा धर्मकोविदः ॥ १७ ॥
आनृशंस्यादनुक्रोशाद्धर्मात्सत्यात्पराक्रमात् ।
गुरुत्वात्त्वयि संप्रेक्ष्य बहून् क्लेशांस्तितिक्षते ॥ १८ ॥
दुर्योधने सौबले च कर्णे दुःशासने तथा ।
एतेष्वैश्वर्यमाधाय[6] कथं त्वं भूतिमिच्छसि ॥ १९ ॥
आत्मज्ञानं[7] समारंभस्तितिक्षा धर्मनित्यता ।
यमर्थान्नापकर्षति स वै पंडित उच्यते ॥ २० ॥
निषेवते प्रशस्तानि निंदितानि न सेवते ।
अनास्तिकः श्रद्दधान एतत्पंडितलक्षणम् ॥ २१ ॥
क्रोधो हर्षश्च दर्पश्च ह्रीस्तंभो मान्यमानिता ।
यमर्थान्नापकर्षति स वै पंडित उच्यते ॥ २२ ॥
यस्य कृत्यं न जानंति मंत्रं वा मंत्रितं परे ।
कृतमेवास्य जानंति स वै पंडित उच्यते ॥ २३ ॥
यस्य कृत्यं न विघ्नंति शीतमुष्णं भयं रतिः ।
समृद्धिरसमृद्धिर्वा स वै पंडित उच्यते ॥ २४ ॥
यस्य संसारिणी प्रज्ञा धर्मार्थावनुवर्तते ।

---

१ प्रकर्षेण एषणीयः ते त्वया वनं प्रेषितः. २ राज्यलक्षणहीनः. ३ राज्यांशे. ४ नेत्ररश्मीनाम् । धर्मात्मापि सन्न राज्यसंमत इत्युपहासो गम्यते. ५ युधिष्ठिर इति शेषः. ६. एतेषामधीनो भूत्वेत्यर्थः. ७ दुर्योधनादीनां मौर्ख्यं प्रदर्शयितुं पंडितलक्षणान्याह. ८ पुरुषार्थात्. ९ परावज्ञानम्. १० आत्मानं मानार्हं मन्यते स मान्यमानी तस्य भावः. ११ संसारित्वेऽपि यः धर्मार्थौ साधयति.

कामादर्थं[१] वृणीते यः स वै पंडित उच्यते ॥ २५ ॥
यथाशक्ति चिकीर्षंति यथाशक्ति च कुर्वते ।
न किंचिदवमन्यंते नराः पंडितबुद्धयः ॥ २६ ॥
क्षिप्रं विजानाति चिरं शृणोति[२] विज्ञाय चार्थं भजते न कामात्।
नासंपृष्टो[३] व्युपयुंक्ते[४] परार्थे तत्प्रज्ञानं[५] प्रथमं पंडितस्य ॥ २७ ॥
नाप्राप्यमभिवांछंति नष्टं नेच्छंति शोचितुम् ।
आपत्सु च न मुह्यंति नराः पंडितबुद्धयः ॥ २८ ॥
निश्चित्य[६] यः प्रक्रमते नांतर्वसति[७] कर्मणः ।
अवंध्यकालो वश्यात्मा स वै पंडित उच्यते ॥ २९ ॥
आर्यकर्माणि[८] रज्यंते भूतिकर्माणि कुर्वते ।
हितं च नाभ्यसूयंति पंडिता भरतर्षभ ॥ ३० ॥
न हृष्यत्यात्मसंमाने नावमानेन तप्यते ।
गांगो ह्रद इवाक्षोभ्यो यः स पंडित उच्यते ॥ ३१ ॥
तत्त्वज्ञः[९] सर्वभूतानां योगज्ञः[१०] सर्वकर्मणाम् ।
उपायज्ञो मनुष्याणां[११] नरः पंडित उच्यते ॥ ३२ ॥
प्रवृत्तवाक्[१२]चित्रकथ ऊहवान्[१३] प्रतिभानवान्[१४] ।
आशु ग्रंथस्य वक्ता च यः स पंडित उच्यते ॥ ३३ ॥
श्रुतं प्रज्ञानुगं[१५] यस्य प्रज्ञा चैव श्रुतानुगा[१६] ।

---

१ कामादर्थं श्रेष्ठं मन्यते इत्यर्थः. २ चिरं ज्ञानदार्ढ्याय शृणोति. ३ यथावत् अपृष्टः. ४ वाग्व्ययं करोति. ५ चिह्नम्. ६ स्वयत्नसाध्यत्वं निश्चित्य. ७ मध्ये नोपरमते. ८ शिष्टयोग्ये कर्मणि रमन्ते. ९ तत्त्वं विनाशित्वम्. १० योगो रचनाप्रकारः. ११ नराणां मध्ये. १२ अकुण्ठितवचनः. १३ तर्कवान्. १४ तत्कालस्फूर्तिमान्. १५ बुद्धिवश्यम्. १६ शास्त्रानुसारिणी.

असंभिन्नार्यमर्यादः पंडिताख्यां लभेत सः ॥ ३४ ॥
अश्रुतश्च समुन्नद्धो दरिद्रश्च महामनाः ।
अर्थां[1]श्चाकर्मणा प्रेप्सुर्मूढ इत्युच्यते बुधैः ॥ ३५ ॥
स्वमर्थं यः परित्यज्य परार्थमनुतिष्ठति ।
मिथ्या चरति मित्रार्थे यश्च मूढः स उच्यते ॥ ३६ ॥
अकामा[2]न्कामयति यः कामया[3]नान्परित्यजेत् ।
बलवंतं च यो द्वेष्टि तमाहुर्मूढचेतसम् ॥ ३७ ॥
अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च ।
कर्म चारभते दुष्टं तमाहुर्मूढचेतसम् ॥ ३८ ॥
संसा[4]रयति कृत्यानि सर्वत्र विचिकित्सते ।
चिरं करोति क्षिप्रार्थे स मूढो भरतर्षभ ॥ ३९ ॥
श्राद्धं पितृभ्यो न ददाति दैवतानि न चार्चति ।
सुहृन्मित्रं न लभते तमाहुर्मूढचेतसम् ॥ ४० ॥
अनाहूतः प्रविशति अपृष्टो बहु भाषते ।
अविश्वस्ते विश्वसिति मूढचेता नराधमः ॥ ४१ ॥
परं क्षिपति दोषेण वर्तमानः स्वयं तथा ।
यश्च क्रुध्यत्यनीशानः स च मूढतमो नरः ॥ ४२ ॥
आत्मनो बलमज्ञाय धर्मार्थपरिवर्जितम् ।
अलभ्यमिच्छन्नैष्कर्म्यान्मूढबुद्धिरिहोच्यते ॥ ४३ ॥
अशिष्यं शास्ति यो राजन्यश्च शून्य[5]मुपासते ।
[6]कदर्यं भजते यश्च तमाहुर्मूढचेतसम् ॥ ४४ ॥

---

१ कर्मणा विना हीनकर्मणा वा. २ भक्तिहीनान्. ३ भक्तियुक्तान्. ४ व्यर्थमेव विस्तारयति. ५ भजनानर्हं भजते. ६ कृपणम्.

अर्थं महांतमासाद्य विद्यामैश्वर्यमेव वा ।
विचरत्यसमुन्नद्धो[1] यः स पंडित उच्यते ॥ ४५ ॥
एकः संपन्नम[2]श्नाति वस्ते वासश्च शोभनम् ।
योऽसंविभज्य भृत्येभ्यः को नृशंसतरस्ततः ॥ ४६ ॥
एकः पापानि कुरुते फलं भुंक्ते महाजनः ।
भोक्तारो विप्रमुच्यंते कर्ता दोषेण लिप्यते ॥ ४७ ॥
एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् ॥ ४८ ॥
एकया[3] द्वे[4] विनिश्चित्य त्रीं[5]श्च[6]तुर्भिर्वशे कुरु ।
पंच[7] जित्वा विदित्वा षट्[8] सप्त[9] हित्वा सुखी भव ॥ ४९ ॥
एकं विषरसो हंति शस्त्रेणैकश्च वध्यते ।
सराष्ट्रं सप्रजं हंति राजानं मंत्रविप्लवः[10] ॥ ५० ॥
एकः स्वादु न भुंजीत एकश्चार्थान्न चिंतयेत् ।
एको न गच्छेदध्वानं नैकः सुप्तेषु जागृयात् ॥ ५१ ॥
एकमेवाद्वितीयं तद्यद्राजन्नावबुध्यसे ।
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ॥ ५२ ॥
एकः क्षमावतां दोषो द्वितीयो नोपपद्यते ।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ ५३ ॥
सोऽस्य दोषो न मंतव्यः क्षमा हि परमं बलम् ।
क्षमा गुणो ह्यशक्तानां शक्तानां भूषणं क्षमा ॥ ५४ ॥

---

१ अनुद्धतः. २ शोभनं स्वादु इत्यर्थः. ३ बुद्ध्या. ४ कार्याकार्ये. ५ मित्रोदासीनशत्रून्. ६ सामदानदण्डभेदैः. ७ इन्द्रियाणि. ८ सन्धिविग्रहादीन्. ९ स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पंचमम् । महच्च दण्डपारुष्यमर्थदूषणमेव च (९७) इति सप्त. १० अगोपनम्.

क्षमा वशीकृतिर्लोके क्षमया किं न साध्यते ।
शांतिखङ्गः करे यस्य किं करिष्यति दुर्जनः ॥ ५५ ॥
अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ।
अक्षमावान्परं दोषैरात्मानं चैव योजयेत् ॥ ५६ ॥
एको धर्मः परं श्रेयः क्षमैका शांतिरुत्तमा ।
विद्यैका परमा तृप्तिरहिंसैका सुखावहा ॥ ५७ ॥
द्वाविमौ ग्रसते भूमिः सर्पो बिलशयानिव ।
राजानं चाविरोद्धारं[1] ब्राह्मणं चाप्रवासिनम् ॥ ५८ ॥
द्वे कर्मणी नरः कुर्वन्नस्मिंल्लोके विरोचते ।
अब्रुवन्परुषं किंचिदसतोऽनर्चयंस्तथा ॥ ५९ ॥
द्वाविमौ पुरुषव्याघ्र परप्रत्ययकारिणौ[2] ।
स्त्रियः कामितकामिन्यो लोकः पूजितपूजकः ॥ ६० ॥
द्वाविमौ कंटकौ तीक्ष्णौ शरीरपरिशोषिणौ ।
यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः ॥ ६१ ॥
द्वावेव न विराजेते विपरीतेन कर्मणा ।
गृहस्थश्च निरारंभः कार्यवांश्चैव भिक्षुकः ॥ ६२ ॥
द्वाविमौ पुरुषौ राजन्स्वर्गस्योपरि तिष्ठतः ।
प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान् ॥ ६३ ॥
न्यायागतस्य द्रव्यस्य बोद्धव्यौ द्वावतिक्रमौ ।
अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनम् ॥ ६४ ॥
द्वावंभसि निवेष्टव्यौ गले बध्वा दृढांशिलाम् ।
धनवंतमदातारं दरिद्रं चातपस्विनम् ॥ ६५ ॥

---

१ युद्धासमर्थं दुर्बलमित्यर्थः. २ अन्येषामनुभवेन कर्तुं शीलं ययोः.

द्वाविमौ पुरुषव्याघ्र सूर्यमंडलभेदिनौ ।
परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ॥ ६६ ॥
त्रयोपाया[1] मनुष्याणां श्रूयंते भरतर्षभ ।
कनीयान्मध्यमः श्रेष्ठ इति वेदविदो विदुः ॥ ६७ ॥
त्रिविधाः पुरुषा राजन्नुत्तमाधममध्यमाः ।
नियोजयेद्यथावत्तांस्त्रिविधेष्वेव कर्मसु ॥ ६८ ॥
त्रय एवाधना राजन्भार्या दासस्तथा सुतः ।
यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥ ६९ ॥
हरणं च परस्वानां परदाराभिमर्शनम् ।
सुहृदश्च परित्यागस्त्रयो दोषाः क्षयावहाः ॥ ७० ॥
त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ ७१ ॥
वरप्रदानं राज्यं च पुत्रजन्म च भारत ।
शत्रोश्च मोक्षणं कृच्छात्त्रीणि चैकं च तत्समम् ॥ ७२ ॥
भक्तं च भजमानं च तवास्मीति च वादिनम् ।
त्रीनेतांश्छरणं प्राप्तान्विषमे[2]ऽपि न संत्यजेत् ॥ ७३ ॥

चत्वारि राज्ञा तु महाबलेन
वर्ज्यान्याहुः पंडितस्तानि विद्यात् ।
अल्पप्रज्ञैः सह मंत्रं न कुर्या-
न्न दीर्घसूत्रै रभसै[3]श्चारणै[4]श्च ॥ ७४ ॥

---

१ त्रयः उपाया इति पदच्छेदः सन्धिरार्षः. युद्धं कनीयान्, भेद-दाने मध्यमः, साम उत्तमः. २ सङ्कटेऽपि. ३ हर्षतरलैः विचारशून्यैरित्यर्थः. ४ आरणैः रणभीरुभिः.

चत्वारि ते तात गृहे वसंतु श्रियाभिजुष्टस्य गृहस्थधर्मे ।
वृद्धो[1] ज्ञातिरवसन्नः कुलीनः सखा दरिद्रो भगिनी
चानपत्या ॥ ७५ ॥

चत्वार्याह महाराज साद्यस्कानि[2] बृहस्पतिः ।
पृच्छते त्रिदशेंद्राय तानीमानि निबोध मे ॥ ७६ ॥
देवतानां च संकल्पम्[3] अनुभावं[4] च धीमताम् ।
विनयं कृतविद्यानां विनाशं पापकर्मणाम् ॥ ७७ ॥

चत्वारि कर्माण्यभयंकराणि भयं प्रयच्छंत्ययथाकृतानि ।
मानाग्निहोत्रमुत मानमौनं मानेनाधीतमुत मानयज्ञः ॥७८॥
पंचाग्नयो[5] मनुष्येण परिचर्याः प्रयत्नतः ।
पिता माताग्निरात्मा च गुरुश्च भरतर्षभ ॥ ७९ ॥
पंचैव पूजयंल्लोके यशः प्राप्नोति केवलम् ।
देवान्पितॄन्मनुष्यांश्च भिक्षूनतिथिपंचमान् ॥ ८० ॥
पंच त्वानुगमिष्यंति यत्र यत्र गमिष्यसि ।
मित्राण्यमित्रा मध्यस्था उपजीव्योपजीविनः ॥ ८१ ॥
पंचेंद्रियस्य मर्त्यस्य छिद्रं चेदेकमिंद्रियम् ।
ततोऽस्य स्रवति प्रज्ञा दृतेः[6] पात्रादिवोदकम् ॥ ८२ ॥
षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तंद्री भयं क्रोध आलस्यं दीर्घसूत्रता ॥ ८३ ॥

---

१ वृद्धः कुलधर्मानुपदिशति, कुलीनः शिशून् आचारं ग्राहयति, सखा हितं वदति, भगिनी गृहकृत्यानि सम्यक्कारयति. २ साद्यस्कानि सफलानि. ३ इच्छाम्. ४ प्रभावं. ५ गृह्याग्निवत्सर्वदा अवश्यं पूज्या इत्यर्थः. ६ दृतिश्चर्ममयं जलपात्रम्.

षडिमान्पुरुषो जह्याद्भिन्नां नावमिवार्णवे ।
अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥ ८४ ॥
अरक्षितारं राजानं भार्यां चाप्रियवादिनीम् ।
ग्रामकामं च गोपालं वनकामं च नापितम् ॥ ८५ ॥
षडेव तु गुणाः पुंसा न हातव्याः कदाचन ।
सत्यं दानमनालस्यमनसूया क्षमा धृतिः ॥ ८६ ॥
अर्थागमो नित्यमरोगिता च प्रिया च भार्या प्रियवादिनी च ।
वश्यश्च पुत्रोऽर्थकरी च विद्या षड् जीवलोकस्य सुखानि राजन् ॥ ८७ ॥
षण्णामात्मनि नित्यानामैश्वर्यं योऽधिगच्छति ।
न स पापैः कुतोऽनर्थैर्युज्यते विजितेंद्रियः ॥ ८८ ॥
षडिमे षट्सु जीवंति सप्तमो नोपलभ्यते ।
चौराः प्रमत्ते जीवंति व्याधितेषु चिकित्सकाः ॥ ८९ ॥
प्रमदाः कामयानेषु यजमानेषु याजकाः ।
राजा विवदमानेषु नित्यं मूर्खेषु पंडिताः ॥ ९० ॥
षडिमानि विनश्यंति मुहूर्तमनवेक्षणात् ।
गावः सेवा कृषिर्भार्या विद्या वृषलसंगतिः ॥ ९१ ॥
षडेते ह्यवमन्यंते नित्यं पूर्वोपकारिणम् ।
आचार्यं शिक्षिताः शिष्याः कृतदाराश्च मातरम् ॥ ९२ ॥
नारीं विगतकामास्तु कृतार्थाश्च प्रयोजकम् ।
नावं निस्तीर्णकांतारा आतुरांश्च चिकित्सकम् ॥ ९३ ॥
आरोग्यमानृण्यमविप्रवासः सद्भिर्मनुष्यैः सह संप्रयोगः ।

---

१ आरोग्ये सतीति शेषः.

स्वप्रत्ययावृत्तिरभीतवासः षड् जीवलोकस्य सुखानि राजन् ॥ ९४ ॥
ईर्ष्यी घृणी न संतुष्टः क्रोधनो नित्यशंकितः ।
परभाग्योपजीवी च षडेते नित्यदुःखिताः ॥ ९५ ॥
सप्त दोषाः सदा राज्ञा हातव्या व्यसनोदयाः[2] ।
प्रायशो यैर्विनश्यंति कृतमूला अपीश्वराः ॥ ९६ ॥
स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पंचमम् ।
महच्च दंडपारुष्यमर्थदूषणमेव च ॥ ९७ ॥
अष्टौ पूर्वनिमित्तानि नरस्य विनशिष्यतः ।
ब्राह्मणान्प्रथमं द्वेष्टि ब्राह्मणैश्च विरुध्यते ॥ ९८ ॥
ब्राह्मणस्वानि चादत्ते ब्राह्मणांश्च जिघांसति ।
रमते निंदया चैषां प्रशंसां नाभिनंदति ॥ ९९ ॥
नैनां स्मरति कृत्येषु याचितश्चाभ्यसूयति ।
एतान्दोषान्नरः प्राज्ञो बुध्येद्बुद्ध्वा विसर्जयेत् ॥ १०० ॥
अष्टाविमानि हर्षस्य नवनीतानि भारत ।
वर्तमानानि दृश्यंते तान्येव स्वसुखान्यपि ॥ १ ॥
समागमश्च सखिभिर्महांश्चैव धनागमः ।
पुत्रेण च परिष्वंगः संनिपातश्च मैथुने ॥ २ ॥
समये च प्रियालापः स्वयूथ्येषु समुन्नतिः ।
अभिप्रेतस्य लाभश्च पूजा च जनसंसदि ॥ ३ ॥
अष्टौ गुणाः पुरुषं दीपयंति प्रज्ञा च कौल्यं च दमः श्रुतं च ।
पराक्रमश्चाबहुभाषिता च दानं यथाशक्ति कृतज्ञता च ॥ ४ ॥

---

१ स्वानुकूलवृत्तिः जीविका. २ दुःखोत्पादकाः.

नवद्वारमिदं वेश्म[1] त्रिस्थूणं[2] पंचसाक्षिकम्[3] ।
क्षेत्रज्ञाधिष्ठितं[4] विद्वान्यो वेद स परः कविः[5] ॥ ५ ॥
दश धर्मं न जानंति धृतराष्ट्र निबोध तान् ।
मत्तः[6] प्रमत्त[7] उन्मत्तः[8] श्रांतः क्रुद्धो बुभुक्षितः ॥ ६ ॥
त्वरमाणश्च लुब्धश्च भीतः कामी च ते दश ।
तस्मादेतेषु सर्वेषु न प्रसज्जेत पंडितः ॥ ७ ॥
अत्रैवोदाहरंतीममितिहासं पुरातनम् ।
पुत्रार्थमसुरेंद्रेण गीतं चैव सुधन्वना ॥ ८ ॥
यः काममन्यू[9] प्रजहाति राजा पात्रे प्रतिष्ठापयते धनं च ।
विशेषविच्छ्रुतवान्[10] क्षिप्रकारी तं सर्वलोकः कुरुते प्रमाणम् ९
जानाति विश्वासयितुं[11] मनुष्यान्विज्ञातदोषेषु दधाति दंडम् ।
जानाति मात्रां[12] च तथा क्षमां च तं तादृशं श्रीर्जुषते समग्रा ॥ ११० ॥
सुदुर्बलं नावजानाति कंचिद्युक्तो[13] रिपुं सेवते बुद्धिपूर्वम् ॥
न विग्रहं रोचयते बलस्थैः काले च यो विक्रमते स धीरः ११
प्राप्यापदं न व्यथते कदाचिदुद्योगमन्विच्छति चाप्रमत्तः ।
दुःखं च काले सहते महात्मा धुरंधरस्तस्य जिताः सपत्नाः १२
अनर्थकं विप्रवासं गृहेभ्यः पापैः संधिं परदाराभिमर्शम् ।
दंभं स्तैन्यं पैशुनं मद्यपानं न सेवते यश्च सुखी सदैव ॥ १३ ॥

---

१ शरीररूपं गृहं. २ अविद्या, कामः, कर्म चेति त्रयः स्थूणाः धारका यस्य. ३ शब्दादयः. ४ आत्मा. ५ प्राज्ञः. ६ मद्यादिना मत्तः. ७ विषयसक्तत्वेन अनवहितः. ८ उन्मत्तोऽपस्मारादिना ९ मन्युः क्रोधः. १० तारतम्यज्ञः. ११ आत्मनि तेषां विश्वासं उत्पादयितुम्. १२ अपराधानुसारेण दण्डप्रमाणम्. १३ युक्तः अवहितः.

न संरंभेण[१]ारभते त्रिवर्ग[२]माकारितः[३] शंसति तत्त्वमेव ।
न मित्रार्थे रोचयते विवादं नापूजितः कुप्यति चाप्यमूढः १४
न योऽभ्यसूयत्यनुकंपते च न दुर्बलः प्रातिभाव्यं[४] करोति ।
नात्याह किंचित्क्षमते विवादं सर्वत्र तादृग्लभते प्रशंसाम् १५
यो नोद्धतं कुरुते जातु वेषं न पौरुषेणापि विकत्थतेऽन्यान् ।
न मूर्च्छितः कटुकान्याह किंचित्प्रियं सदा तं कुरुते जनो हि ॥ १६ ॥
न वैरमुद्दीपयति प्रशांतं न दर्पमारोहति नास्तमेति ।
न दुर्गतोऽस्मीति करोत्यकार्यं तमार्यशीलं परमाहुरार्याः १७
न स्वे सुखे वै कुरुते प्रहर्षं नान्यस्य दुःखे भवति प्रहृष्टः ।
दत्त्वा न पश्चात्कुरुते न तापं स कथ्यते सत्पुरुषार्यशीलः १८
देशाचारान्समयाञ्ज्ञातिधर्मान्बुभूषते यः स परावरज्ञः ।
स यत्र तत्राभिगतः सदैव महाजनस्याधिपत्यं करोति ॥१९॥
दंभं मोहं मत्सरं पापकृत्यं राजद्विष्टं पैशुनं पूंग[५]वैरम् ।
मत्तोन्मत्तैर्दुर्जनैश्चापि वादं यः प्रज्ञावान् वर्जयेत्स प्रधानः[६] २०
दानं मोहं दैवतं मंगलानि प्रायश्चित्तान्विविधाँल्लोकवादान् ।
एतानि यः कुरुते नैत्यकानि तस्योत्थानं देवता राधयंति २१
समैर्विवाहं कुरुते न हीनैः समैः सख्यं व्यवहारं कथां च ।
गुणैर्विशिष्टांश्च पुरोदधाति विपश्चितस्तस्य नयाः सुनीताः २२
मितं भुंक्ते संविभज्याश्रितेभ्यो मितं स्वपित्यमितं कर्म कृत्वा ।
ददात्यमित्रेष्वपि याचितः संस्तमात्मवंतं प्रजहत्यनर्थाः ॥२३॥
चिकीर्षितं विप्रकृतं च यस्य नान्ये जनाः कर्म जानंति किंचित् ।

---

१ क्रोधेन. २ धर्मकामार्थान्. ३. पृष्टः. ४ प्रातिभाव्यं विरोधम्. ५ पूगः संघः. ६ श्रेष्ठः.

मंत्रे गुप्ते सम्यगनुष्ठिते च नाल्पोप्यस्य च्यवते कश्चिदर्थः ॥२४
यः सर्वभूतप्रशमे निविष्टः सत्यो मृदुर्मानकृच्छुद्धभावः ।
अतीव स ज्ञायते ज्ञातिमध्ये महामणिर्जात्य[1] इव प्रसन्नः॥२५
य आत्मनापत्रपते[2] भृशं नरः स सर्वलोकस्य गुरुर्भवत्युत ।
अनंततेजाः सुमनाः समाहितः स तेजसा सूर्य इवावभासते२६
वने जाताः शापदग्धस्य राज्ञः पांडोः पुत्राः पंच पंचेंद्रकल्पाः ।
त्वयैव बाला वर्धिताः शिक्षिताश्च तवादेशं पालयंत्यांबिकेय२७
प्रदायैषामुचितं तात राज्यं सुखी पुत्रैः सहितो मोदमानः ।
न देवानां नापि च मानुषाणां भविष्यसि त्वं तर्कणीयो[3]
नरेंद्र ॥ १२८ ॥

इति श्रीमहाभारते उद्योगपर्वणि प्रजागरपर्वणि विदुरनीतिवाक्ये त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

## धृतराष्ट्र उवाच

जाग्रतो दह्यमानस्य[4] यत्कार्यमनुपश्यसि ।
तद्ब्रूहि त्वं हि नस्तात धर्मार्थकुशलो ह्यसि ॥ १ ॥
त्वं मां यथावद्विदुर प्रशाधि प्रज्ञापूर्वं सर्वमजातशत्रोः ।
यन्मन्यसे पथ्यमदीनसत्व श्रेयस्करं ब्रूहि तद्वै कुरूणाम्॥२॥
पापाशंकी पापमेवानुपश्यन् पृच्छामि त्वां व्याकुलेनात्मनाहम्
कवे[5] तन्मे ब्रूहि सर्वं यथावन्मनीषितं सर्वमजातशत्रोः ॥३॥

## विदुर उवाच

शुभं वा यदि पापं द्वेष्यं वा यदि वा प्रियम् ।

---

१ जात्यः अभिजातः उत्तमे आकरे जात इत्यर्थः. २. परैः अज्ञातेऽपि स्वदोषे आत्मनि लज्जते. ३. शंक्यः ४. चिन्ताग्निना. ५ पंडित.

अपृष्टस्तस्य तद्ब्रूयाद्यस्य नेच्छेत्पराभवम् ॥ ४ ॥
तस्माद्वक्ष्यामि ते राजन् हितं यत्स्यात् कुरून्प्रति ।
वचः श्रेयस्करं धर्म्यं ब्रुवतस्तन्निबोध मे ॥ ५ ॥
मिथ्योपेतानि[1] कर्माणि सिध्येयुर्यानि भारत ।
अनुपायप्रयुक्तानि[2] मास्म तेषु मनः कृथाः ॥ ६ ॥
तथैव योगविहितं[3] यत्तु कर्म न सिध्यति ।
उपाययुक्तं मेधावी न तत्र ग्लपयेन्मनः ॥ ७ ॥
अनुबंधानपेक्षेत[4] सानुबंधेषु कर्मसु ।
संप्रधार्य[5] च कुर्वीत न वेगेन समाचरेत् ॥ ८ ॥
अनुबंधं च संप्रेक्ष्य विपाकं चैव कर्मणाम् ।
उत्थानमात्मनश्चैव[6] धीरः कुर्वीत वा न वा ॥ ९ ॥
यः प्रमाणं न जानाति स्थाने वृद्धौ तथा क्षये ।
कोशे जनपदे दंडे न स राज्येवतिष्ठते ॥ १० ॥
यस्त्वेतानि प्रमाणानि यथोक्तान्यनुपश्यति ।
युक्तो धर्मार्थयोर्ज्ञाने स राज्यमधिगच्छति ॥ ११ ॥
न राज्यं प्राप्तमित्येव वर्तितव्यमसांप्रतम्[7] ।
श्रियं ह्यविनयो हंति जरारूपमिवोत्तमम् ॥ १२ ॥
भक्ष्योत्तमप्रतिच्छन्नं मत्स्यो बडिशमायसम् ।
लोभाभिपाती ग्रसते नानुबंधमवेक्षते ॥ १३ ॥
यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत् ।
हितं च परिणामे यत्तदाद्यं भूतिमिच्छता ॥ १४ ॥

---

१ कपटयुक्तानि. २. असदुपायैः. ३ प्रयत्नयुक्तम्. ४. प्रयोजनानि.
५ निश्चित्य. ६ उद्यमम्. ७ अयुक्तम्.

वनस्पतेरपक्वानि फलानि प्रचिनोति यः ।
स नाप्नोति रसं तेभ्यो बीजं चास्य विनश्यति ॥ १५ ॥
यस्तु पक्वमुपादत्ते काले परिणतं फलम् ।
फलाद्रसं स लभते बीजाच्चैव फलं पुनः ॥ १६ ॥
यथा मधु समादत्ते रक्षन् पुष्पाणि षट्पदः ।
तद्वदर्थान्मनुष्येभ्य आदद्यादविहिंसया ॥ १७ ॥
पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत् ।
मालाकार इवारामे न यथांगारकारकः ॥ १८ ॥
किन्नु मे स्यादिदं कृत्वा किन्नु मे स्यादकुर्वतः ।
इति कर्माणि संचिंत्य कुर्याद्वा पुरुषो न वा ॥ १९ ॥
अनारभ्या भवंत्यर्थाः [1]केचिन्नित्यं तथाऽगताः ।
कृतः पुरुषकारो हि भवेद्येषु निरर्थकः ॥ २० ॥
प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः ।
न तं भर्तारमिच्छंति षंढं पतिमिव स्त्रियः ॥ २१ ॥
कांश्चिदर्थान्नरः प्राज्ञो लघुमूलान्महाफलान् ।
क्षिप्रमारभते कर्तुं न विघ्नयति तादृशान् ॥ २२ ॥
ऋजु [2]पश्यति यः सर्वं चक्षुषानुपिबन्निव ।
आसीनमपि तूष्णीकमनुरज्यंति तं प्रजाः ॥ २३ ॥
सुपुष्पि[3]तः स्यादफलः फलि[4]तः स्याद्दुरारुहः ।
अपक्व[5]ः पक्वसंकाशो न तु शीर्येत कर्हिचित् ॥ २४ ॥

---

१ प्रबलैः सह वैरादयः. २ दर्शनेनैव प्रीणयति इत्यर्थः. ३ प्रीतिमेव दर्शयेत् न धनदानादि. ४ दत्तेपि धने भृत्यवश्यो न भवेत्. ५. अशक्तोप्यंतः बहिः शक्तिं प्रदर्शयेत्.

चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम् ।
प्रसादयति यो लोकं तं लोकोनुप्रसीदति ॥ २५ ॥
यस्मात्त्रस्यंति भूतानि मृगव्याधान्मृगा इव ।
सागरान्तामपि महीं लब्ध्वा स परिहीयते ॥ २६ ॥
पितृपैतामहं राज्यं प्राप्तवान् स्वेन कर्मणा ।
वायुरभ्रमिवासाद्य भ्रंशयत्यनये स्थितः ॥ २७ ॥
धर्ममाचरतो राज्ञः सद्भिश्चरितमादितः ।
वसुधा वसुसंपूर्णा वर्धते भूतिवर्धिनी ॥ २८ ॥
अथ संत्यजतो धर्ममधर्मं चानुतिष्ठतः ।
प्रति[1]संवेष्टते भूमिरग्नौ चर्माहितं यथा ॥ २९ ॥
य एव यत्नः क्रियते परराष्ट्रविमर्दने ।
स एव यत्नः कर्तव्यः स्वराष्ट्रपरिपालने ॥ ३० ॥
धर्मेण राज्यं विंदेत धर्मेण परिपालयेत् ।
धर्ममूलां श्रियं प्राप्य न जहाति न हीयते ॥ ३१ ॥
अप्युन्मत्तात्प्रलपतो बालाच्च परिजल्पतः ।
सर्वतः सारमादद्यादश्मभ्य इव कांचनन् ॥ ३२ ॥
सुव्याहृतानि सूक्तानि सुकृतानि ततस्ततः ।
संचिन्वन् धीर आसीत शि[2]लाहारी शिलं यथा ॥ ३३ ॥
गंधेन गावः पश्यंति वेदैः पश्यंति ब्राह्मणाः ।
चारैः पश्यंति राजानश्चक्षुर्भ्यामितरे जनाः ॥ ३४ ॥
भूयांसं लभते क्लेशं या गौर्भवति दुर्दुहा ।
अथ या सुदुहा राजन्नैव तां वितुदंत्यपि ॥ ३५ ॥

---

१ संकुचति बहुफलं न प्रयच्छतीत्यर्थः. २ शिलं कणिशाद्यर्जनम्.

यदतप्तं प्रणमति न तत्संतापयंत्यपि ।
यच्च स्वयं नतं दारु न तत्संनमयंत्यपि ॥ ३६ ॥
एतयोपमया धीरः सन्नमेत बलीयसे ।
इंद्राय स प्रणमते नमते यो बलीयसे ॥ ३७ ॥
पर्जन्यनाथाः पशवो राजानो मंत्रिबांधवाः ।
पतयो बांधवाः स्त्रीणां ब्राह्मणा वेदबांधवाः ॥ ३८ ॥
सत्येन रक्ष्यते धर्मो विद्या योगेन[1] रक्ष्यते ।
मृजया[2] रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते ॥ ३९ ॥
मानेन रक्ष्यते धान्यमश्वान् रक्षत्यनुक्रमः[3] ।
अभीक्षणदर्शनं गाश्च स्त्रियो रक्ष्याः कुचैलतः ॥ ४० ॥
न कुलं वृत्तहीनस्य प्रमाणमिति मे मतिः ।
अंतेष्[4]वपि हि जातानां वृत्तमेव विशिष्यते ॥ ४१ ॥
य ईर्षुः परवित्तेषु रूपे वीर्ये कुलान्वये ।
सुखसौभाग्यसत्कारे तस्य व्याधिरनंतकः ॥ ४२ ॥
अकार्यकरणाद्भीतः कार्याणां च विवर्जनात् ।
अकाले मंत्रभेदाच्च येन माद्येन्न तत्पिबेत् ॥ ४३ ॥
विद्यामदो धनमदस्तृतीयोभि[5]जनो मदः ।
मदा एतेवलिप्तानामेत एव सतां दमाः ॥ ४४ ॥
असंतोऽभ्यर्थिताः सद्भिः कच्चित्कार्ये कदाचन ।
मन्यंते संतमात्मानमसंतमपि विश्रुतम् ॥ ४५ ॥
गतिरात्मवतां संतः संत एव सतां गतिः ।
असतां च गतिः संतो नत्वसंतः सतां गतिः ॥ ४६ ॥

---

१ अभ्यासेन. २ मार्जनोद्वर्तनादिना. ३ व्यायामशिक्षादि. ४. नीचकुलेषु. ५ सहायः.

जिता सभा वस्त्रवता मिष्टाशा गोमता जिता ।
अध्वा जितो यानवता सर्वं शीलवता जितम् ॥ ४७ ॥
शीलं प्रधानं पुरुषे तद्यस्येह प्रणश्यति ।
न तस्य जीवितेनार्थो न धनेन न बंधुभिः ॥ ४८ ॥
आढ्यानां मांसपरमं मध्यानां गोरसोत्तरम् ।
तैलोत्तरं दरिद्राणां भोजनं भरतर्षभ ॥ ४९ ॥
संपन्नतरमेवान्नं[1] दरिद्रा भुंजते सदा ।
क्षुत्स्वादुतां जनयति सा चाढ्येषु सुदुर्लभा ॥ ५० ॥
प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते ।
जीर्यंत्यपि हि काष्ठानि दरिद्राणां महीपते ॥ ५१ ॥
अवृत्तिर्भयमंत्यानां[2] मध्यानां मरणाद्भयम् ।
उत्तमानां तु मर्त्यानामवमानात्परं भयम् ॥ ५२ ॥
ऐश्वर्यमदपापिष्ठा[3] मदाः पानमदादयः ।
ऐश्वर्यमदमत्तो हि नापतित्वा[4] विबुध्यते ॥ ५३ ॥
इंद्रियैरिंद्रियार्थेषु[5] वर्तमानैरनिग्रहैः[6] ।
तैरयं ताप्यते[7] लोको नक्षत्राणि ग्रहैरिव ॥ ५४ ॥
यो जितः पंचवर्गेण[8] सहजेनात्मकर्षिणा ।
आपदस्तस्य वर्धंते शुक्लपक्ष इवोडुराट्[9] ॥ ५५ ॥
अविजित्य यथात्मानममात्यान् विजिगीषते ।
अमित्रान्वाऽजितामात्यः सोवशः परिहीयते[10] ॥ ५६ ॥

---

१ स्वादुतरम्. २ दरिद्राणाम्. ३ ऐश्वर्यमदः पापिष्ठः निन्दिततमो-येषां ते. ४ पतनं दारिद्र्यं अप्राप्य न जानाति अवहितो भवति किन्तु दरिद्रो भूत्वैव. ५ विषयेषु. ६ अस्वाधीनैः. ७ ताप्यते, आक्रम्यते. ८ पंचेंद्रियैः. ९ चन्द्रः. १० त्यजते.

आत्मानमेव[1] प्रथमं द्वेष्यरूपेण योजयेत् ।
ततोमात्यानमित्रांश्च न मोघं विजिगीषते ॥ ५७ ॥
वश्येंद्रियं जितात्मानं धृतदंडं विकारिषु ।
परीक्ष्य कारिणं धीरमत्यंतं श्रीर्निषेवते ॥ ५८ ॥
रथः शरीरं पुरुषस्य राजन्नात्मा नियंतेंद्रियाण्यस्य चाश्वाः ।
तैरप्रमत्तः कुशली सदश्वैर्दांतैः सुखं याति रथीव धीरः ॥५९॥
एतान्यनिगृहीतानि व्यापादयितुम्[2]प्यलम् ।
अविधेया इवादांता हयाः पथि कुसारथिम् ॥ ६० ॥
अनर्थमर्थतः पश्यन्नर्थं चैवाप्यनर्थतः ।
इंद्रियैरजितैर्बालः सुदुःखं मन्यते सुखम् ॥ ६१ ॥
धर्मार्थौ यः परित्यज्य स्यादिंद्रियवशानुगः ।
श्रीप्राणधनदारेभ्यः क्षिप्रं स परिहीयते ॥ ६२ ॥
अर्थानामीश्वरो यः स्यादिंद्रियाणामनीश्वरः ।
इंद्रियाणामनैश्वर्यादैश्वर्याद्भ्रश्यते हि सः ॥ ६३ ॥
आत्मनात्मानमन्विच्छेन्मनोबुद्धींद्रियैर्यतैः ।
आत्मा ह्येवात्मनो बंधुरात्मैव रिपुरात्मनः ॥ ६४ ॥
बंधुरात्मात्मनस्तस्य येनैवात्मात्मना जितः ।
स एव नियतो बंधुः स एव नियतो रिपुः ॥ ६५ ॥
क्षुद्रा[3]क्षेणेव जालेन झषाव[4]पिहितावुरू[5] ।
कामश्च राजन् क्रोधश्च तौ प्रज्ञानं विलुंपतः ॥ ६६ ॥

---

१ आदौ मनस एव जयः कार्यः. २ नाशयितुम्. ३ क्षुद्राक्षेण सूक्ष्मच्छिद्रेण. ४ अपिहितौ छादितौ. ५ उरू महान्तौ यथा मीनौ जालं छिंतः.

समवेक्ष्येह धर्मार्थौ संभारान्[1] योऽधिगच्छति ।
स वै संभृतसंभारः सततं सुखमेधते ॥ ६७ ॥
यः पंचाभ्यंतरान् शत्रूनविजित्य मनोमयान् ।
जिगीषति रिपूनन्यान् रिपवोऽभिभवंति तम् ॥ ६८ ॥
दृश्यंते हि महात्मानो बध्यमानाः स्वकर्मभिः ।
इंद्रियाणामनीशत्वाद्राजानो राज्यविभ्रमैः ॥ ६९ ॥
असंत्यागात् पापकृतामपापांस्तुल्यो दंडः स्पृशते मिश्रभावात् ।
शुष्केणार्द्रं दह्यते मिश्रभावात्तस्मात्पापैः सह संधिं न कुर्यात्
निजानुत्पततः शत्रून्पञ्च[2] पंचप्रयोजनान् ।
यो मोहान्न निगृह्णाति तमापद्ग्रसते नरम् ॥ ७१ ॥
अनसूयार्जवं शौचं संतोषः प्रियवादिता ।
दमः सत्यमनायासो[3] न भवंति दुरात्मनाम् ॥ ७२ ॥
आत्मज्ञानमनायासस्तितिक्षा धर्मनित्यता ।
वाक्चैव गुप्ता दानं च नैतान्यंत्येषु[4] भारत ॥ ७३ ॥
आक्रोश[5]परिवादाभ्यां विहिंसंत्यबुधा बुधान् ।
वक्ता पापमुपादत्ते क्षममाणो विमुच्यते ॥ ७४ ॥
हिंसा बलमसाधूनां राज्ञां दंडविधिर्बलम् ।
शुश्रूषा तु बलं स्त्रीणां क्षमा गुणवतां बलम् ७५ ॥
वाक्संयमो हि नृपते सुदुष्करतमो मतः ।
अर्थवच्च विचित्रं च न शक्यं बहु भाषितुम् ॥ ७६ ॥
अभ्यावहति कल्याणं विविधं वाक् सुभाषिता ।

---

१ संभारान् साधनानि. २ इन्द्रियाणि. ३ स्थैर्यम्. ४ नीचेषु. ५ आक्रोशः परुषभाषणम् परिवादो निंदा.

सैव दुर्भाषिता राजन्ननर्थायोपपद्यते ॥ ७७ ॥
रोहते सायकैर्विद्धं वनं परशुना हतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥ ७८ ॥
[1]कर्णिनालीकनाराचान्निर्हरंति शरीरतः ।
वाक्शल्यस्तु न निर्हतुं शक्यो हृदिशयो हि सः ॥ ७९ ॥
वाक्सायका वदनान्निष्पतंति यैराहतः शोचति राज्यहानि ।
परस्य नार्मर्मसु[2] ते पतंति तान्पंडितो नावसृजेत्परेभ्यः॥८०॥
यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् ।
बुद्धिं तस्यापकर्षंति सोऽवाचीनानि[3] पश्यति ॥ ८१ ॥
बुद्धौ कलुषभूतायां विनाशे प्रत्युपस्थिते ।
अनयो नयसंकाशो हृदयान्नापसर्पति ॥ ८२ ॥
सेयं बुद्धिः परीता ते पुत्राणां भरतर्षभ ।
पांडवानां विरोधेन न चैनानवबुध्यसे ॥ ८३ ॥
राजा लक्षणसम्पन्नस्त्रैलोक्यस्यापि यो भवेत् ।
शिष्यस्ते शासिता[4] सोस्तु धृतराष्ट्र युधिष्ठिरः ॥ ८४ ॥
अतीव सर्वान्पुत्रांस्ते भागधेयपुरस्कृतः ।
तेजसा प्रज्ञया चैव युक्तो धर्मार्थतत्त्ववित् ॥ ८५ ॥
अनुक्रोशा[5]दानृशंस्याद्योसौ धर्मभृतां वरः ।
गौरवात्तव राजेन्द्र बहून्क्लेशांस्तितिक्षति ॥ ८६ ॥

इति श्रीमहाभारते उद्योगपर्वणि प्रजागरपर्वणि विदुरनीतिवाक्ये चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

१ कर्ण्यादयो बाणविशेषाः २ नामर्मसु किंतु मर्मस्वेव. ३ अवाचीनानि नीचकर्माणि. ४ शासिता पृथिव्याः राजा अस्तु. ५ अनुक्रोशो दया.

**धृतराष्ट्र उवाच**

ब्रूहि भूयो महाबुद्धे धर्मार्थसहितं वचः ।
शृण्वतो नास्ति मे तृप्तिर्विचित्राणीह भाषसे ॥ १ ॥

**विदुर उवाच**

सर्वतीर्थेषु वा स्नानं सर्वभूतेषु चार्जवम्[1] ।
उभे त्वेते समे स्यातामार्जवं वा विशिष्यते ॥ २ ॥
आर्जवं प्रतिपद्यस्व पुत्रेषु सततं विभो ।
इह कीर्तिं परां प्राप्य प्रेत्य स्वर्गमवाप्स्यसि ॥ ३ ॥
यावत्कीर्तिर्मनुष्यस्य पुण्या लोके प्रगीयते ।
तावत्स पुरुषव्याघ्र स्वर्गलोके महीयते ॥ ४ ॥
अत्राप्युदाहरंतीममितिहासं पुरातनम् ।
विरोचनस्य संवादं केशिन्यर्थे सुधन्वना ॥ ५ ॥
स्वयंवरे स्थिता कन्या केशिनी नाम नामतः ।
रूपेणाप्रतिमा राजन् विशिष्ट[2]पतिकाम्यया ॥ ६ ॥
विरोचनोथ दैतेयस्तदा तत्राजगाम ह ।
प्राप्तुमिच्छंस्ततस्तत्र दैत्येंद्रं प्राह केशिनी ॥ ७ ॥

**केशिन्युवाच**

किं ब्राह्मणाः स्विच्छ्रेयांसो दितिजा स्विद्विरोचन ।
अथ केन स[3] पर्यंकं सुधन्वा नाधिरोहति ॥ ८ ॥

**विरोचन उवाच**

प्राजापत्यास्तु वै श्रेष्ठा वयं केशिनि सत्तमाः ।

---

१ आर्जवं अवैषम्यम्. २ श्रेष्ठपतिलाभेच्छया. ३ सुधन्वा ब्राह्मणः कुतः पर्यंकं न अधिरोहति किमर्थं श्रेष्ठो नास्ति अपि तु श्रेष्ठोस्तीत्यर्थः.

अस्माकं खल्विमे लोकाः के देवाः के द्विजातयः ॥९॥

**केशिन्युवाच**

इहैवावां प्रतीक्षाव उपस्थाने[1] विरोचन ।
सुधन्वा प्रातरागन्ता पश्येयं वां समागतौ[2] ॥ १० ॥

**विरोचन उवाच**

तथा भद्रे करिष्यामि यथा त्वं भीरु भाषसे ।
सुधन्वानं च मां चैव प्रातर्द्रष्टासि संगतौ ॥ ११ ॥

**विदुर उवाच**

अतीतायां च शर्वर्यामुदिते सूर्यमंडले ।
अथाजगाम तन्देशं सुधन्वा राजसत्तम ।
विरोचनो यत्र विभो केशिन्या सहितः स्थितः ॥ १२ ॥
सुधन्वा च समागच्छत्प्राह्रादिं केशिनीं तथा ।
समागतं द्विजं दृष्ट्वा केशिनी भरतर्षभ ।
प्रत्युत्थायासनं तस्मै पाद्यमर्घ्यं ददौ पुनः ॥ १३ ॥

**सुधन्वोवाच**

अन्वालभे[3] हिरण्मयम्प्राह्रादे ते वरासनम् ।
एकत्वमुपसम्पन्नो न त्वाऽसेहं त्वया सह ॥ १४ ॥

**विरोचन उवाच**

तवार्हते[4] तु फलकं[5] कूर्चं वाप्यथवा बृसी[6] ।
सुधन्वन्नत्वमर्होसि मया सह समासनम् ॥ १५ ॥

---

१ मत्समीपमागमने. २ एकदैवागतौ. ३ स्पृशामि. ४ अर्हते योग्यं भवति. ५ फलकं काष्ठपीठं. ६ बृसी दर्भासनम्.

सुधन्वोवाच

पितापुत्रौ सहासीतां द्वौ विप्रौ क्षत्रियावपि ।
वृद्धौ वैश्यौ च शूद्रौ च न त्वन्यावितरेतरम् ॥ १६ ॥
पिता हि ते समासीनमुपासीतैव मामधः[1] ।
बालः सुखैधितो गेहे न त्वं किंचन बुध्यसे ॥ १७ ॥

विरोचन उवाच

हिरण्यं च गवाश्वं च यद्वित्तमसुरेषु नः ।
सुधन्वन्विपणे तेन प्रश्नं पृच्छाव ये[2] विदुः ॥ १८ ॥

सुधन्वोवाच

हिरण्यं च गवाश्वं च तवैवास्तु विरोचन ।
प्राणयोस्तु पणं कृत्वा प्रश्नं पृच्छाव ये[2] विदुः ॥ १९ ॥

विरोचन उवाच

आवां कुत्र गमिष्यावः प्राणयोर्विपणे कृते ।
न तु देवेष्वहं स्थाता न मनुष्येषु कर्हिचित् ॥ २० ॥

सुधन्वोवाच

पितरं ते गमिष्यावः प्राणयोर्विपणे कृते ।
पुत्रस्यापि स हेतोर्हि प्रह्लादो नानृतं वदेत् ॥ २१ ॥

विदुर उवाच

एवं कृतपणौ क्रुद्धौ तत्राभिजग्मतुस्तदा ।
विरोचनसुधन्वानौ प्रह्लादो यत्र तिष्ठति ॥ २२ ॥

प्रह्लाद उवाच

इमौ तौ संप्रदृश्येते याभ्यां न चरितं[3] सह ।

---

१ अधः स्थित्वा मामुपासीत असेवत. २ ये जानंति तान् पृच्छाव. ३ न कदाप्येकत्र गमनं कृतम्.

आशीविषाविव क्रुद्धावेकमार्गाविहागतौ ॥ २३ ॥
किं वै सहैवं चरथो न पुरा चरथः सह ।
विरोचनैतत्पृच्छामि किं ते सख्यं सुधन्वना ॥ २४ ॥

**विरोचन उवाच**

न मे सुधन्वना सख्यं प्राणयोर्विपणावहे ।
प्रह्लाद तत्त्वं पृच्छामि मा प्रश्नमनृतं वदेः ॥ २५ ॥

**प्रह्लाद उवाच**

उदकं मधुपर्कं वाप्यानयन्तु सुधन्वने ।
ब्रह्मन्नभ्यर्चनीयोऽसि श्वेता गौः पीवरी[1] कृता[2] ॥ २६ ॥

**सुधन्वोवाच**

उदकं मधुपर्कं च पथिष्वेवार्पितं मम ।
प्रह्लाद त्वं तु मे तथ्यं प्रश्नं प्रब्रूहि पृच्छतः ।
किं ब्राह्मणाः स्विच्छ्रेयांस उताहो स्विद्विरोचनः ॥ २७ ॥

**प्रह्लाद उवाच**

पुत्र एको मम ब्रह्मंस्त्वं च साक्षादिहास्थितः ।
तयोर्विवदतोः प्रश्नं कथमस्मद्विधो वदेत् ॥ २८ ॥

**सुधन्वोवाच**

गां प्रदद्यास्त्वौरसाय यद्वान्यत्स्यात्प्रियं धनम् ।
द्वयोर्विवदतोस्तथ्यं वाच्यं च मतिमंस्त्वया ॥ २९ ॥

**प्रह्लाद उवाच**

अथ यो नैव प्रब्रूयात्सत्यं वा यदि वानृतम् ।
एतत्सुधन्वन्पृच्छामि दुर्विवक्ता[3] स किं वसेत् ॥ ३० ॥

---

१ पुष्टा. २ मधुपर्कार्थमुपकल्पिता. ३ अन्याय्यवक्ता किं दुःखं प्राप्नुयात्.

**सुधन्वोवाच**

यां रात्रिमधिविन्ना[१] स्त्री यां चैवाक्षपराजितः ।
यां च भाराभितप्तांगो दुर्विवक्ता स तां वसेत्[२] ॥ ३१ ॥
नगरे[३] प्रतिरुद्धः सन् बहिर्द्वारे बुभुक्षितः ।
अमित्रान् भूयसः पश्येद्यः साक्ष्यमनृतं वदेत् ॥ ३२ ॥
पञ्च[४] पश्वनृते हन्ति दश हन्ति गवानृते ।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥ ३३ ॥
हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् ।
सर्वं भूम्यनृते हन्ति मास्म भूम्यनृतं वदेः ॥ ३४ ॥

**प्रह्राद उवाच**

मत्तः श्रेयानंगिरा[५] वै सुधन्वा त्वद्विरोचन ।
मातास्य श्रेयसी मातुस्तस्मात्त्वं तेन वै जितः ॥ ३५ ॥
विरोचन सुधन्वायं प्राणानामीश्वरस्तव ।
सुधन्वन्पुनरिच्छामि त्वया दत्तं विरोचनम् ॥ ३६ ॥

**सुधन्वोवाच**

यद्धर्ममवृणीथास्त्वं न कामादनृतं वदीः[६] ।
पुनर्ददामि ते पुत्रं तस्मात्प्रह्राद दुर्लभम् ॥ ३७ ॥
एष प्रह्राद पुत्रस्ते मया दत्तो विरोचनः ।
पादप्रक्षालनं कुर्यात्कुमार्याः[७] सन्निधौ मम ॥ ३८ ॥

**विदुर उवाच**

तस्माद्राजेन्द्र भूम्यर्थे नानृतं वक्तुमर्हसि ।

---

१ अधिविन्ना कृतसपत्नीका. २ तां रात्रिं वसेत्तद्दुःखं प्राप्नुयात्. ३ क्षुधार्तः शत्रुवेष्टितश्च यद्दुःखं लभते तदेव अनृतवक्ता साक्षी प्राप्नोतीत्यर्थः. ४ पश्वर्थमनृतभाषणे कृते नरः पञ्च पुरुषान्हन्ति एवमुत्तरत्र. ५ अङ्गिरा सुधन्वनः पिता. ६ लुङो रूपं अडभाव आर्षः. ७ केशिन्याः.

मागमः ससुतामात्यो नाशं पुत्रार्थम[1]ब्रुवन् ॥ ३९ ॥

न देवा दण्डमादाय रक्षन्ति पशुपालवत् ।
यं तु रक्षितुमिच्छन्ति बुद्ध्या [2]संविभजंति तम् ॥ ४० ॥

यथा यथा हि पुरुषः कल्याणे कुरुते मनः ।
तथा तथास्य सर्वार्थाः सिध्यन्ते नात्र संशयः ॥ ४१ ॥

नैनं छं[3]दांसि वृजिनात्तारयन्ति मायाविनं मायया वर्तमानम् ।
[4]नीडं शकुन्ता इव जातपक्षाश्छन्दांस्येनं प्रजहत्यन्तकाले ॥

मद्यपानं कलहं [5]पूंगवैरं भार्यापत्योर्[6]न्तरं ज्ञातिभेदम् ।
राजद्विष्टं स्त्रीपुंसयोर्विवादं वर्ज्यान्याहुर्यश्च पंथाः प्रदुष्टः॥४३

सा[7]मुद्रिकं वणिजं चोर[8]पूर्वं शला[9]कधूर्तं च चिकित्सकं च ।
अरिं च मित्रं च [10]कुंशीलवं च नैतान्साक्ष्ये त्वधिकुर्वीत सप्त ४४

मानाग्निहोत्रमुत मानमौनं मानेनाधीतमुत मानयज्ञः ।
एतानि चत्वार्यभयंकराणि भयं प्रयच्छन्त्ययथाकृतानि ॥४५

अगारदाही गरदः कुं[11]डाशी सोमविक्रयी ।
पर्व[12]कारश्च [13]सूची च मित्रध्रुक् पारदारिकः ॥ ४६ ॥

भ्रूणहा गुरुतल्पी च यश्च स्यात्पानपो द्विजः ।
अतितीक्ष्णश्च [14]कौकश्च नास्तिको वेदनिंदकः ॥ ४७ ॥

---

१ सत्यमिति शेषः. २ योजयंति. ३ वेदाः. ४ नीडं पक्षिगृहम्. ५ पूगः संघः. ६ वियोगः. ७ हस्तरेखादिपरीक्षकम्. ८ पूर्वं चोरः चोरपूर्वः. ९ शलाकया अन्यान्वंचयति तम्. १० कुत्सितं शीलं वाति अनुसरति तम्. ११ भगोपजीवी, पत्यौ अमृते जारादुत्पन्नः कुंडः तेन निमित्तेन अश्नाति सः. १२ शस्त्रकारः. १३ पिशुनः. १४ क्षतोद्वर्तनेन काकवत् दुःखितस्यापि दुःखं करोति सः.

स्रुवप्रग्रहणो[1] व्रात्यः[2] कीनाश[3]श्चात्मवाँ[4]नपि ।
रक्षेत्युक्तश्च यो हिंस्यात् सर्वे ब्रह्महभिः समाः ॥ ४८ ॥
तृणोल्कया ज्ञायते जातरूपं वृत्तेन भद्रो[5] व्यवहारेण साधुः ।
शूरो भयेष्वर्थकृच्छ्रेषु धीरः कृच्छ्रेष्वापत्सु सुहृदश्चारयश्च ४९
जरा रूपं हरति हि धैर्यमाशा मृत्युः प्राणान्धर्मचर्यामसूया ।
क्रोधः श्रियं शीलमनार्यसेवा ह्रियं कामः सर्वमेवाभिमानः ५०
श्रीर्मंगलात्प्रभवति प्रागल्भ्यात्संप्रवर्धते ।
दाक्ष्यात्तु कुरुते मूलं संयमात्प्रतितिष्ठति ॥ ५१ ॥
अष्टौ गुणाः पुरुषं दीपयन्ति प्रज्ञा च कौल्यं[6] च दमः श्रुतं च ।
पराक्रमश्चाबहुभाषिता च दानं यथाशक्ति कृतज्ञता च ॥ ५२ ॥
एतान्गुणांस्तात महानुभावानेको गुणः संश्रयते प्रसह्य ।
राजा यदा सत्कुरुते मनुष्यं सर्वान्गुणानेष गुणो[7] विभाति ॥५३
अष्टौ नृपेमानि मनुष्यलोके स्वर्गस्य लोकस्य निदर्शनानि ।
चत्वार्येषामन्ववेतानि[8] सद्भिश्चत्वारि चैषामनुयान्ति सन्तः ५४
यज्ञो दानमध्ययनं तपश्च चत्वार्येतान्यन्ववेतानि सद्भिः ।
दमः सत्यमार्जवमानृशंस्यं चत्वार्येतान्यनुयान्ति सन्तः ॥५५॥
इज्याध्ययनदानानि तपः सत्यं क्षमा घृणा[9] ।
अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥ ५६ ॥
तत्र पूर्वचतुर्वर्गो दम्भार्थमपि सेव्यते ।

---

१ राजकीयाधिकारबलेन लोकेभ्योऽन्यायतः धान्यादिग्राहकः. २ व्रात्यः पतितः अकृतोपनयनो वा. ३ क्रूरः. ४ आत्मवान्समर्थोपि रक्षेत्युक्तो यो हिंस्यात्. ५ धर्मः. ६ कुलीनता. ७ परसत्काररूपः. ८ नित्यसंबद्धानि. ९ दया.

उत्तरश्च चतुर्वर्गो नामहात्मसु तिष्ठति ॥ ५७ ॥
न सा सभा यत्र न सन्ति वृद्धा न ते वृद्धा ये न वदन्ति धर्मम् ।
नासौ धर्मो यत्र न सत्यमस्ति न तत्सत्यं यच्छलेनाभ्युपेतम् ५८
सत्यं रूपं श्रुतं विद्या कौल्यं शीलं बलं धनम् ।
शौर्यं च चित्रभाष्यं च दशेमे स्वर्गयोनयः ॥ ५९ ॥
पापं कुर्वन्पापकीर्तिः पापमेवाश्नुते फलम् ।
पुण्यं कुर्वन्पुण्यकीर्तिः पुण्यमत्यंतमश्नुते ॥ ६० ॥
तस्मात्पापं न कुर्वीत पुरुषः शंसितव्रतः ।
पापं प्रज्ञां नाशयति क्रियमाणं पुनःपुनः ॥ ६१ ॥
नष्टप्रज्ञः पापमेव नित्यमारभते नरः ।
पुण्यं प्रज्ञां वर्धयति क्रियमाणं पुनःपुनः ॥ ६२ ॥
वृद्धप्रज्ञः पुण्यमेव नित्यमारभते नरः ।
पुण्यं कुर्वन्पुण्यकीर्तिः पुण्यं स्थानं स गच्छति ।
तस्मात्पुण्यं निषेवेत पुरुषः सुसमाहितः ॥ ६३ ॥
असूयको दंदशूको निष्ठुरो वैरकृच्छठः ।
स कृच्छ्रं महदाप्नोति न चिरात्पापमाचरन् ॥ ६४ ॥
अनसूयुः कृतप्रज्ञः शोभनान्याचरन्सदा ।
नैकृच्छ्रं महदाप्नोति सर्वत्र च विरोचते ॥ ६५ ॥
प्रज्ञामेवावगमयति यः प्राज्ञेभ्यः स पण्डितः ।
प्राज्ञो ह्यवाप्य धर्मार्थौ शक्नोति सुखमेधितुम् ॥ ६६ ॥
दिवसेनैव तत्कुर्याद्येन रात्रौ सुखं वसेत् ।

---

१ विनीतमुद्रा. २ अध्ययनम्. ३ मर्मच्छेत्ता. ४ अप्रियवाक्.
५ नकृच्छ्रमित्येकं पदम् सुखवाचि.

अष्टमासेन तत्कुर्याद्येन वर्षाः[1] सुखं वसेत् ॥ ६७ ॥
पूर्वे वयसि तत्कुर्याद्येन वृद्धः सुखं वसेत् ।
यावज्जीवेन तत्कुर्याद्येन प्रेत्य सुखं वसेत् ॥ ६८ ॥
जीर्णमन्नं प्रशंसन्ति भार्यां च गतयौवनाम् ।
शूरं विजितसंग्रामं गतपारं[2] तपस्विनम् ॥ ६९ ॥
धनेनाधर्मलब्धेन यच्छिद्रमपिधीयते ।
असंवृतं तद्भवति ततोऽन्यदवदीर्यते ॥ ७० ॥
गुरुरात्मवतां[3] शास्ता शास्ता राजा दुरात्मनाम् ।
अथ प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥ ७१ ॥
ऋषीणां च नदीनां च कुलानां च महात्मनाम् ।
प्रभवो[4] नाधिगन्तव्यः स्त्रीणां दुश्चरितस्य च ॥ ७२ ॥
द्विजातिपूजाभिरतो दाता ज्ञातिषु चार्जवी ।
क्षत्रियः शीलभाग्राजंश्चिरं पालयते महीम् ॥ ७३ ॥
सुवर्णपुष्पां पृथिवीं चिन्वंति पुरुषास्त्रयः ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥ ७४ ॥
बुद्धिश्रेष्ठानि[5] कर्माणि बाहुमध्यानि भारत ।
तानि जंघाजघन्यानि भारप्रत्यवराणि च ॥ ७५ ॥
दुर्योधनेऽथ शकुनौ मूढे दुःशासने तथा ।
कर्णे चैश्वर्यमाधाय कथं त्वं भूतिमिच्छसि ॥ ७६ ॥

---

१ अत्यंतसंयोगे द्वितीया. २ लब्धेश्वरतत्त्वम्. ३ आत्मवतां जितचित्तानाम्. ४ सामर्थ्यम् अनन्तत्वान्न ज्ञातुं शक्यः. ५ बुद्धिबलसाध्यानि श्रेष्ठानि, बाहुबलसाध्यानि मध्यमानि, जंघाशब्देन गोपनीयं कपटादि लक्ष्यते तेन साध्यानि जघन्यानि, नीचानि भारो बलात्कारः तेन साध्यानि अपि प्रत्यवराणि नीचानि.

सर्वैर्गुणैरुपेतास्तु पाण्डवा भरतर्षभ ।
पितृवत्त्वयि वर्तन्ते तेषु वर्तस्व पुत्रवत् ॥ ७७ ॥

इति श्रीमहाभारते उद्योगपर्वणि प्रजागरपर्वणि विदुरनीतिवाक्ये पंचात्रिंशोऽध्यायः ॥ ३५ ॥

विदुर उवाच

अत्रैवोदाहरंतीममितिहासं पुरातनम् ।
आत्रेयस्य च संवादं साध्यानां चेति नः श्रुतम् ॥ १ ॥
चरंतं हंस[1]रूपेण महर्षिं संशितव्रतम् ।
साध्या देवा महाप्राज्ञं पर्यपृच्छन्त वै पुरा ॥ २ ॥

साध्या ऊचुः

साध्या देवा वयमेते महर्षे दृष्ट्वा भवन्तं न शक्नुमोऽनुमातुम् ।
श्रुतेन धीरो बुद्धिमांस्त्वं मतो नः [2]काव्यां वाचं वक्तुमर्हस्युदाराम्

हंस उवाच

एतत्कार्यममराः संश्रुतं मे धृतिः शमः सत्यधर्मानुवृत्तिः ।
[3]ग्रन्थिं विनीय हृदयस्य सर्वं प्रियाप्रिये चात्मसमं नयीत[4] ॥४॥
आक्रुश्यमानो नाक्रोशेन्मन्युरेव तितिक्षतः ।
आक्रोष्टारं निर्दहति सुकृतं चास्य विंदति ॥ ५ ॥
नाक्रोशी स्यान्नावमानी परस्य मित्रद्रोही नोत नीचोपसेवी ।
न चाभिमानी न च हीनवृत्तो रूक्षां वाचं [5]रुषतीं वर्जयीत ॥६॥

---

१ हंसः परिव्राट्. २ काव्यां विद्वद्योग्याम्. ३ हृदयस्थं संपूर्ण देहात्माभिमानरूपं चिज्जडग्रन्थि विनीय दूरीकृत्य आत्मना शरीरेण समं सह प्रियाप्रिये अपि दूरीकुर्यात्, यथा शरीरं असत्यं तथा तन्मूलके प्रियाप्रिये अपि इति जानीयादित्यर्थः. ४ आर्षप्रयोगः. ५ रोषवतीम्.

मर्माण्यस्थीनि हृदयं तथासून् रूक्षा वाचो निर्दहंतीह पुंसाम् ।
तस्माद्वाचमुशतीमुग्ररूपां धर्मारामो नित्यशो वर्जयीत ॥ ७ ॥
अरुंतुदं परुषं रूक्षवाचं वाक्कण्टकैर्वितुदन्तं मनुष्यान् ।
विद्यादलक्ष्मीकतमं जनानां मुखे निबद्धां निर्ऋतिं[1] वै वहन्तम्
परश्चेदेनमभिविध्येत बाणैर्भृशं सुतीक्ष्णैरनलार्कदीप्तैः ।
स विध्यमानोऽप्यतिदह्यमानो विद्यात्कविः सुकृतं मे दधाति[2] ९
यदि सन्तं सेवति यद्यसन्तं तपस्विनं यदि वा स्तेनमेव ।
वासो यथा रंगवशं प्रयाति तथा स तेषां वशमभ्युपैति ॥ १० ॥
[3]अतिवादं न प्रवदेन्न वादयेद्यो नाहतः[4] प्रतिहन्यान्न घातयेत्
हन्तुं च यो नेच्छति पापकं[5] वै तस्मै देवाः स्पृहयन्त्य[6]यागताय॥
[7]अव्याहृतं व्याहृताच्छ्रेय आहुः सत्यं वदेद्व्याहृतं तद्द्वितीयम्
प्रियं वदेद्व्याहृतं तत्तृतीयं धर्मं वदेद्व्याहृतं तच्चतुर्थम् ॥ १२ ॥
यादृशैः संनिविशते यादृशांश्चोपसेवते ।
यादृगिच्छेच्च भवितुं तादृग्भवति पूरुषः ॥ १३ ॥
यतो यतो निवर्तते ततस्ततो विमुच्यते ।
निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि ॥ १४ ॥
न जीयते चानुजिगीषतेऽन्यान्न वैरकृच्चाप्रतिघातकश्च ।
निंदाप्रशंसासु समस्वभावो न शोचते हृष्यति नैव चायम्॥ १५
भावमिच्छति सर्वस्य नाभावे कुरुते मनः ।

---

१ अलक्ष्मीम्. २ पुष्णाति. ३ प्रोक्तोप्यतिवादं स्वयं न वदेत् नाप्यन्येन वादयेत्. ४ आहतोपि न प्रतिहन्यात् नाप्यन्येन घातयेत्. ५ पापकर्तारमपि. ६ देवा अपि तं पूजयन्तीत्यर्थः. ७ अव्याहृतं मौनं श्रेष्ठं ततोपि सत्यं, ततोपि सत्यं प्रियं च ततोपि सत्यं प्रियं धर्म्यं श्रेष्ठम्. ८ कल्याणम्.

सत्यवादी मृदुर्दान्तो यः स उत्तमपूरुषः ॥ १६ ॥
नानर्थकं[1] सान्त्वयति प्रतिज्ञाय ददाति च ।
रन्ध्रं परस्य जानाति यः स मध्यमपूरुषः ॥ १७ ॥
दुःशासनस्तूपहतोभिशस्तो[2] नावर्तते मन्युवशात्कृतघ्नः ।
न कस्यचिन्मित्रमथो दुरात्मा कलाश्चैता अधमस्येह पुंसः ॥
न श्रद्दधाति कल्याणं परेभ्योप्यात्म[3]शंकितः ।
निराकरोति मित्राणि यो वै सोऽधमपूरुषः ॥ १९ ॥
उत्तमानेन सेवेत प्राप्तकाले तु मध्यमान् ।
अधमांस्तु न सेवेत य इच्छेद्भूतिमात्मनः ॥ २० ॥
प्राप्नोति वैचित्तमसद्बलेन नित्योत्थानात्प्रज्ञया पौरुषेण ।
न त्वेव सम्यग्लभते प्रशंसां न वृत्तमाप्नोति महाकुलानाम् २१

## धृतराष्ट्र उवाच

महाकुलेभ्यः स्पृहयन्ति देवा धर्मार्थनित्याश्च बहुश्रुताश्च ।
पृच्छामि त्वां विदुर प्रश्नमेतं भवन्ति वै कानि महाकुलानि ॥

## विदुर उवाच

तपो दमो ब्रह्म[4]वित्तं वितानाः[5] पुण्या विवाहाः सततान्नदानम् ।
येष्वेवैते सप्त गुणा वसन्ति सम्यग्[6]वृत्तास्तानि महाकुलानि २३
येषां हि वृत्तं व्यथते न [7]योनिश्चित्तप्रसादेन चरन्ति धर्मम् ।
ये कीर्तिमिच्छन्तिकुलेविशिष्टां त्यक्तानृतास्तानि महाकुलानि

---

१ मिथ्याशब्दैरेव न सान्त्वयति किंतु कर्मणापि. २ घोषयात्रादिषु ताडितो बद्धोपि दुष्कृतैर्न निवर्तते. क्रोधवशात् पाण्डवोपकारमपि न स्मरति. ३ आत्मनि शङ्कितः विश्वासहीनः. ४ ब्राह्मणानां धनं वेदाध्ययनाध्यापनादिरूपम्. ५ वितानाः यज्ञकर्माणि. ६ सुस्थिताः ७ योनिः पित्रादिः येषां वृत्तं वृत्तेन न व्यथते परं गुणैः तुष्यत्येव.

अनिज्यया कुविवाहैर्वेदस्योत्सादनेन च ।
कुलान्यकुलतां यान्ति धर्मस्यातिक्रमेण च ॥ २५ ॥
देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥ २६ ॥
ब्राह्मणानां परिभवात्परि[1]वादाच्च भारत ।
कुलान्यकुलतां यान्ति न्यासाप[2]हरणेन च ॥ २७ ॥
कुलानि समुपेतानि गोभिः पुरुषतोऽर्थतः ।
कुलसंख्यां न गच्छन्ति यानि हीनानि वृत्ततः ॥ २८ ॥
वृत्ततस्त्वविहीनानि कुलान्यल्पधनान्यपि ।
कुलसंख्यां च गच्छंति कर्षंति[3] च महद्यशः ॥ २९ ॥
वृत्तं यत्नेन संरक्षेद्वित्तमेति च याति च ।
अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥ ३० ॥
गोभिः पशुभिरश्वैश्च कृष्या च सुसमृद्धया ।
कुलानि न प्ररोहन्ति यानि हीनानि वृत्ततः ॥ ३१ ॥
मा नः कुले वैरकृत्कश्चिदस्तु राजामात्यो मा परस्वापहारी ।
मित्रद्रोही नैकृ[4]तिकोनृती वा पूर्वाशी वा पितृदेवातिथिभ्यः ॥
यश्च [5]नो ब्राह्मणान्हन्याद्यश्च नो ब्राह्मणान्द्विषेत्[6] ।
न नः स समितिं गच्छेद्यश्च नो निर्वपेत् कृषिम् ॥ ३३ ॥
तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता ।
सतामेतानि गेहेषु नोच्छिद्यन्ते कदाचन ॥ ३४ ॥
श्रद्धया परया राजन्नुपनीतानि सत्कृतिम् ।

---

१ परिवादो निंदा. २ न्यासो निक्षेपः. ३ आहरन्ति लभन्त इत्यर्थः.
४ नैकृतिकः कपटी. ५ नः कुले मास्तु इति पूर्वेण संबंधः. ६ द्विष्यात्.

प्रवृत्तानि महाप्राज्ञ धर्मिणां पुण्यकर्मिणाम् ॥ ३५ ॥
सूक्ष्मोपि भारं नृपते स्यन्दनो वै शक्तो वोढुं न तथान्ये महीजाः
एवं युक्ता भारसहा भवन्ति महाकुलीना न तथान्ये मनुष्याः ॥
न तन्मित्रं यस्य कोपाद्बिभेति यद्वा मित्रं शङ्कि[१]तेनोपचर्यम् ।
यस्मिन्मित्रे पितरीवाश्वसीत तद्वै मित्रं सङ्गतानीतराणि॥३७॥
यः कश्चिदप्यसम्बद्धो मित्रभावेन वर्तते ।
स एव बन्धुस्तन्मित्रं सा गतिस्तत्परायणम् ॥ ३८ ॥
चलचित्तस्य वै पुंसो वृद्धाननुपसेवतः ।
पारि[२]प्लवमतेर्नित्यमध्रुवो मित्रसंग्रहः ॥ ३९ ॥
चलचित्तमनात्मानमिन्द्रियाणां वशानुगम् ।
अर्थाः समभि[३]वर्तन्ते हंसाः शुष्कं सरो यथा ॥ ४० ॥
अकस्मादेव कुप्यन्ति प्रसीदन्त्यनिमित्ततः ।
शीलमेतदसाधूनामभ्रं पारिप्लवं यथा ॥ ४१ ॥
सत्कृताश्च कृतार्थाश्च मित्राणां न[४] भवन्ति ये ।
तान्मृतानपि क्रव्या[५]दाः कृतघ्नान्नोपभुंजते ॥ ४२ ॥
अर्चयेदेव मित्राणि सति वाऽसति वा धने ।
नानर्थयन्प्र[६]जानाति मित्राणां सारफल्गुताम् ॥ ४३ ॥
सन्तापाद्भ्रश्यते रूपं सन्तापाद्भ्रश्यते बलम् ।
सन्तापाद्भ्रश्यते ज्ञानं सन्तापाद्व्याधिमृच्छति ॥ ४४ ॥

---

१ शंकितेन मनसा उपचर्यं सेव्यं यत् तन्न मित्रं भवति. २ चंचलबुद्धेः. ३ समीपमायान्ति परं न स्पृशंति. ४ मित्राणां हितायेति शेषः. ५ आममांसभक्षकाः गृध्रादयः. अनर्थयन् अलुब्धः सारतां फल्गुतां वा मित्राणां न जानाति लुब्धस्तु स्वकार्यार्थमेव मित्रत्वं करोति.

अनवाप्यं[1] च शोकेन शरीरे चोपतप्यते ।
अमित्राश्च प्रहृष्यन्ति मास्म शोके मनः कृथाः ॥ ४५ ॥
पुनर्नरो म्रियते जायते च पुनर्नरो हीयते वर्धते च ।
पुनर्नरो याचति याच्यते च पुनर्नरः शोचति शोचते च ४६
सुखं च दुःखं च भवाभवौ च लाभालाभौ मरणं जीवितं च ।
पर्यायशः[2] सर्वमेते[3] स्पृशन्ति तस्माद्धीरो न च हृष्येन्न शोचेत् ॥
चलानि हीमानि षडिन्द्रियाणि[4] तेषां यद्यद्वर्धते यत्र यत्र ।
ततस्ततः स्रवते बुद्धिरस्य छिद्रोदकुम्भादिव नित्यमम्भः ४८

धृतराष्ट्र उवाच

तनुरुद्धः[5] शिखी राजा मिथ्योपचरितो मया ।
मन्दानां मम पुत्राणां युद्धेनान्तं करिष्यति ॥ ४९ ॥
नित्योद्विग्नमिदं सर्वं नित्योद्विग्नमिदं मनः ।
यत्तत्पदमनुद्विग्नं तन्मे वद महामते ॥ ५० ॥

विदुर उवाच

नान्यत्र विद्यातपसोर्नान्यत्रेन्द्रियनिग्रहात् ।
नान्यत्र लोभसंत्यागाच्छान्तिं पश्यामि[6] तेऽनघ ॥ ५१ ॥
बुद्ध्या भयं प्रणुदति तपसा विन्दते महत् ।
गुरुशुश्रूषया ज्ञानं शान्तिं योगेन विन्दति ॥ ५२ ॥
अनाश्रिता[7] दानपुण्यं वेदपुण्यमनाश्रिताः ।

---

१ सुखादिशोकेन अप्राप्यमेव, शोकात् शरीरतापमात्रं जायते नान्यत्किंचिदित्यर्थः. २ पर्यायेण. ३ पुरुषमात्रम्. ४ ज्ञानेंद्रियाणि पंच षष्ठं मनः. ५ धर्मराजोऽपि शरीरगुप्तसामर्थ्यः अतः शिखी अग्निरिव. ६ शान्तिं चित्तस्वास्थ्यम्. ७ मोक्षेच्छवः दानपुण्यं स्वर्गाद्यपि नाश्रयंते नेच्छंति.

रागद्वेषविनिर्मुक्ता विचरन्तीह मोक्षिणः ॥ ५३ ॥
स्वधीतस्य सुयुद्धस्य सुकृतस्य च कर्मणः ।
तपसश्च सुतप्तस्य तस्यान्ते सुखमेधते ॥ ५४ ॥
स्वास्तीर्णानि शयनानि प्रपन्ना न वै भिन्ना[1] जातु निद्रां लभन्ते ।
न स्त्रीषु राजन् रतिमाप्नुवन्ति न मागधैः स्तूयमाना न सूतैः ५५
न वै भिन्ना जातु चरन्ति धर्मं न वै सुखं प्राप्नुवन्तीह भिन्नाः ।
न वै भिन्ना गौरवं प्राप्नुवन्ति न वै भिन्नाः प्रशमं रोचयन्ति ५६
न वै तेषां स्वदते पथ्यमुक्तं योग[2]क्षेमं कल्पते नैव तेषाम् ।
भिन्नानां वै मनुजेन्द्र परायणं[3] न विद्यते किंचिदन्यद्विनाशात् ॥
संपन्नं[4] गोषु संभाव्यं संभाव्यं ब्राह्मणे तपः ।
संभाव्यं चापलं स्त्रीषु संभाव्यं ज्ञातितो भयम् ॥ ५८ ॥
तन्तवः प्यायिता[5] नित्यं तनवो[6] बहुलाः समाः ।
बहून्बहुत्वादायासान्सहंतीत्युपमा सताम् ॥ ५९ ॥
धूमायन्ते व्यपेतानि[7] ज्वलन्ति सहितानि च ।
धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ ॥ ६० ॥
ब्राह्मणेषु च ये शूराः[8] स्त्रीषु ज्ञातिषु गोषु च ।
वृन्तादिव फलं पक्वं धृतराष्ट्र पतन्ति ते ॥ ६१ ॥
महानप्येकजो[9] वृक्षो बलवान्सुप्रतिष्ठितः ।
प्रसह्य[10] एव वातेन सस्कन्धो मर्दितुं क्षणात् ॥ ६२ ॥

---

१ ज्ञातिभेदवन्तः. २ अलब्धलाभो योगः लब्धपरिपालनं क्षेम. ३ परिणामः. ४ संपन्नं क्षीरादिसंपत्तिः. ५ प्यायिताः पुष्टा दृष्टा इत्यर्थः. ६ सूक्ष्माः. ७ पृथग्भूतानि. ८ ब्राह्मणादीनां पीडने एव समर्थाः. ९ एकाकी. १० शक्यः.

अथ ये सहिता वृक्षाः सङ्घशः सुप्रतिष्ठिताः ।
ते हि शीघ्रतमान्वातान् सहन्तेऽन्योन्यसंश्रयात् ॥ ६३ ॥
एवं मनुष्यमप्येकं गुणैरपि समन्वितम् ।
शक्यं[1] द्विषन्तो मन्यन्ते वायुर्द्रुममिवैकजम् ॥ ६४ ॥
अन्योन्यसमुपष्टम्भादन्योन्यापाश्रयेण च ।
ज्ञातयः संप्रवर्धन्ते सरसीवोत्पलान्युत ॥ ६५ ॥
अवध्या ब्राह्मणा गावो ज्ञातयः शिशवः स्त्रियः ।
येषां चान्नानि भुञ्जीत ये च स्युः शरणागताः ॥ ६६ ॥
न मनुष्ये गुणः कश्चिद्राजन्सधनतामृते ।
अनातुरत्वाद्[2]भद्रं ते मृतकल्पा हि रोगिणः ॥ ६७ ॥
अव्याधिजं कटुकं शीर्षरोगि पापानुबंधं परुषं तीक्ष्णमुष्णम् ।
सतां पेयं यन्न पिबन्त्यसन्तो मन्युं[3] महाराज पिब प्रशाम्य ६८
रोगार्दिता न फलान्याद्रियन्ते न वै लभन्ते विषयेषु तत्त्वम्[4] ।
दुःखोपेता रोगिणो नित्यमेव न बुध्यन्ते[5] धनभोगान्न सौख्यम् ॥
पुरा ह्युक्तं नाकरोस्त्वं वचो मे द्यूते जितां द्रौपदीं प्रेक्ष्य राजन् ।
दुर्योधनं वारयेत्यक्षवत्यां[6] कितवत्वं[7] पण्डिता वर्जयन्ति ॥७०॥
न तद्बलं यन्मृदुना विरुध्यते सूक्ष्मो धर्मस्तरसा सेवितव्यः ।
प्रध्वंसिनी क्रूरसमाहिता श्रीर्मृदुप्रौढा गच्छति पुत्रपौत्रान् ॥
धार्तराष्ट्राः पाण्डवान्पालयन्तु पाण्डोः सुतास्तव पुत्रांश्च पान्तु ।
एकारिमित्राः कुरवो ह्येककार्या जीवन्तु राजन्सुखिनः समृद्धाः

---

१ नाशयितुमिति शेषः: २ आरोग्यादृते च. ३ दैन्यम्. ४ इष्टानिष्टविवेकम्. ५ अनुभवंति. ६ अक्षक्रीडायाम्. ७ द्यूतप्रियत्वम्. ८ नश्वरा. ९ क्रूरपुरुषे स्थिता.

मेढीभूतः[1] कौरवाणां त्वमद्य त्वय्याधीनं कुरुकुलमाजमीढ ।
पार्थान्बालान्वनवासप्रतप्तान्गोपायस्व स्वं यशस्तात रक्षन् ७३
संधत्स्व त्वं कौरव पाण्डुपुत्रैर्मा तेंऽतरं[2] रिपवः प्रार्थयन्तु ।
सत्ये स्थितास्ते[3] नरदेव सर्वे दुर्योधनं स्थापय त्वं नरेन्द्र ॥७४॥

इति श्रीमहाभारते उद्योगपर्वणि प्रजागरपर्वणि विदुरहितवाक्ये षट्त्रिंशोऽध्यायः ॥ ३६ ॥

विदुर उवाच

सप्तदशेमान् राजेन्द्र मनुः स्वायंभुवोऽब्रवीत् ।
वैचित्रवीर्यपुरुषानाकाशं मुष्टिभिर्घ्नतः[4] ॥ १ ॥
दानवेंद्रस्य[5] च धनुरनाम्यं नमतोऽब्रवीत् ।
अथो मरीचिनः[6] पादानग्राह्यान् गृह्णतस्तथा ॥ २ ॥
यश्चाशिष्यं शास्ति वै यश्च तुष्येद्यश्चातिवेलं भजते द्विषन्तम्
स्त्रियश्च[7] यो रक्षति भद्रमश्नुते यश्चायाच्यं याचते कत्थते वा३
यश्चाभिजातः[9] प्रकरोत्यकार्यं यश्चाबलो बलिना नित्यवैरी ।
अश्रद्दधानाय च यो ब्रवीति यश्चाकाम्यं कामयते नरेंद्र ॥ ४ ॥
वध्वाऽवंहासं[10] श्वशुरो वन्यते यो वध्वा[11]ऽवसन्नभयो मानकामः ।
परक्षेत्रे निर्वपति यश्च बीजं स्त्रियं च यः परिवदतेऽतिवेलम्[12] ५

---

१ यथेष्टप्रचारनिरोधकः स्तंभीभूतः. २ भेदम्. ३ पाण्डवाः. ४ मूर्खा इत्यर्थः. ५ दानूनां मेघानां समूहः दानवं तस्मिन् यदिंद्रस्य धनुः, वर्षाकाले दृश्यमानं तन्नामयितुमिच्छतः. ६ मरीचिनः सूर्यस्य पादान् किरणान् चलं मत्वा ग्रहीतुमिच्छतः. ७ दुर्वृत्तेनेति शेषः. ८ स्त्रीसेवया यः कल्याणं प्राप्नोति, इत्यभिप्रायः. ९ कुलीनः. १० स्नुषया सह परिहासादि कर्तुं यस्मै रोचते. ११ वध्वा निमित्तभूतया तत्पित्रादिभिरापदि त्रातोऽपि मानं कामयते. १२ अतिक्रांतमर्यादम्.

यश्चापि लब्ध्वा न स्मरामीति वादी दत्वा च यः [1]कत्थति याच्यमानः ।
यश्चा[2]सतः सत्त्वमुपानयीत एतान्नयंति निरयं पाशहस्ताः ॥६॥
यस्मिन् यथा वर्तते यो मनुष्यस्तस्मिंस्तथा वर्तितव्यं स धर्मः ।
मायाचारो मायया वर्तितव्यः साध्वाचारः साधुना प्रत्युपेयः ॥७॥
जरारूपं हरति हि धैर्यमाशा मृत्युः प्राणान्धर्मचर्यामसूया ।
कामो ह्रियं वृत्तमनार्यसेवा क्रोधः श्रियं सर्वमेवाभिमानः ॥८॥

**धृतराष्ट्र उवाच**

शतायुरुक्तः पुरुषः सर्ववेदेषु वै यदा ।
नाप्नोत्यथ च तत्सर्वमायुः केनेह हेतुना ॥ ९ ॥

**विदुर उवाच**

अतिमानोऽतिवादश्च तथाऽ[3]त्यागो नराधिप ।
क्रोधश्चात्म[4]विधित्सा च मित्रद्रोहश्च तानि षट् ॥ १० ॥
एत एवासयस्तीक्ष्णाः कृन्तन्त्या[5]यूंषि देहिनाम् ।
एतानि मानवान्घ्नन्ति न मृत्युर्भद्रमस्तु ते ॥ ११ ॥
विश्वस्तस्यैति यो दारान् यश्चापि गुरुतल्पगः ।
वृ[6]षलीपतिर्द्विजो यश्च पा[7]नपश्चैव भारत ॥ १२ ॥
आदे[8]शकृद्वृत्तिहन्ता द्विजानां प्रेषकश्च यः ।
शरणागतहा चैव सर्वे ब्रह्महणः समाः ॥

---

१ आत्मानं श्लाघते. २ असतो अविद्यमानस्य सत्त्वं अस्तित्वं समर्थयते. ३ अत्यागः महापराधः. ४ आत्मनः विधित्सा पोषणेच्छा उदरपरायणत्वमित्यर्थः. ५ छिन्दन्ति. ६ शूद्रा. ७ पानं मद्यादि तत्पिबति. ८ ग्रामणीः, परानेव सर्वदा कार्ये योजयति न स्वयं किमपि करोतीत्यर्थः.

एतैः समेत्य[1] कर्तव्यं प्रायश्चित्तमिति श्रुतिः ॥ १३ ॥
गृहीतवाक्यो[2] नयविद्वदान्यः[3] शेषान्नभोक्ता[4] ह्यविहिंसकश्च ।
नानर्थकृत्याकुलितः कृतज्ञः सत्यो मृदुः स्वर्गमुपैति विद्वान् १४
सुलभाः पुरुषा राजन्सततं प्रियवादिनः ।
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ १५ ॥
यो हि धर्मं समाश्रित्य हित्वा भर्तुः प्रियाप्रिये ।
अप्रियाण्याह पथ्यानि तेन राजा सहायवान् ॥ १६ ॥
त्यजेत्कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ १७ ॥
आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ १८ ॥
द्यूतमेतत्पुराकल्पे दृष्टं वैरकरं नृणाम् ।
तस्माद्द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान् ॥ १९ ॥
उक्तं मया द्यूतकालेऽपि राजन्नेदं युक्तं वचनं प्रातिपेय ।
तदौषधं पथ्यमिवातुरस्य न रोचते तव वैचित्रवीर्य ॥ २० ॥
काकैरिमांश्चित्रबर्हान्मयूरान्पराजयेथाः पाण्डवान्धार्तराष्ट्रैः ।
हित्वा सिंहान् क्रोष्टुकान्गूहमानः[5] प्राप्ते काले शोचिता[6] त्वं नरेन्द्र ॥ २१ ॥
यस्तात न क्रुध्यति सार्वकालं भृत्यस्य[7] भक्तस्य हिते रतस्य ।
तस्मिन्भृत्या भर्तरि विश्वसन्ति न चैनमापत्सु परित्यजन्ति २२
न भृत्यानां वृत्तिसंरोधनेन[8] राज्यं धनं संजिघृक्षेदपूर्वम्[9] ।

---

१ संसर्गं कृत्वा. २ विद्यावान्. ३ दाता. ४ अतिथ्यादीन् संतर्प्य पश्चाद्यो भुनक्ति. ५ रक्षन्. ६ शोचिष्यति. ७ भृत्यायेत्यर्थः. ८ वेतनादिकमदत्वा. ९ ग्रहीतुमिच्छेत्.

त्यजन्ति ह्येनं वंचिता वै विरुद्धाः स्निग्धा ह्यमात्याः परि-
हीनभोगाः ॥ २३ ॥

कृत्यानि पूर्वं परिसंख्याय[1] सर्वाण्यायव्यये चानुरूपां[2] च
वृत्तिम् ।
संगृह्णीयादनुरूपान्सहायान्सहायसाध्यानि हि दुष्कराणि २४

अभिप्रायं यो विदित्वा तु भर्तुः सर्वाणि कार्याणि करोत्यतन्द्री[3] ।
वक्ता हितानामनुरक्त आर्यः शक्तिज्ञ आत्मेव हि सोऽनु-
कम्प्यः ॥ २५ ॥

वाक्यं तु यो नाद्रियतेऽनुशिष्टः[4] प्रत्याह यश्चापि नियु-
ज्यमानः ।
प्रज्ञाभिमानी प्रतिकूलवादी त्याज्यः स तादृक् त्वरयैव
भृत्यः ॥ २६ ॥

अस्तब्धमक्लीबमदीर्घसूत्रं सानुक्रोशं[5] श्लक्ष्णमहार्य[6]मन्यैः ।
अरोगजातीयमुदारवाक्यं दूतं वदन्त्यष्टगुणोपपन्नम् ॥ २७ ॥

न विश्वासाज्जातु परस्य गेहे गच्छेन्नरश्चेतयानो[7] विकाले[8] ।
न चत्वरे[9] निशि तिष्ठेन्निगूढो[10] न राजकाम्यां योषितं प्रा-
र्थयीत ॥ २८ ॥

न निह्नवं[11] मन्त्रगतस्य गच्छेत्संसृष्ट[12]मन्त्रस्य कुसङ्गतस्य ।
न च ब्रूयान्नाश्वसिमि त्वयीति सकारणं[13] व्यपदेशं तु कुर्यात्
॥ २९ ॥

---

१ साध्यासाध्यनिश्चयं कृत्वा. २ प्राप्तिव्ययानुकूलाम्. ३ निरालस्यः. ४ आज्ञप्तः. ५ सदयम्. ६ अभेद्यम्. ७ बोधयन्. ८ अकाले. ९ अंगणे. १० गुप्तः. ११ दुष्टमंत्रस्य अपलापं न कुर्यात्. १२ संसृष्टो बहुकृतः. १३ दुर्मंत्रप्रसंगे मम किंचित्कार्यमस्तीति मिषं कृत्वा दूरं गच्छेदित्यर्थः.

घृणी[1] राजा पुंश्चली राजभृत्यः पुत्रो भ्राता विधवा बालपुत्रा ।
सेनाजीवी चोद्धृतभृतिरेव[2] व्यवहारेषु वर्जनीयाः स्युरेते ३०
अष्टौ गुणाः पुरुषं दीपयन्ति प्रज्ञा च कौल्यं च श्रुतं दमश्च ।
पराक्रमश्चाबहुभाषिता च दानं यथाशक्ति कृतज्ञता च ॥३१॥
एतान्गुणांस्तात महानुभावानेको गुणः संश्रयते प्रसह्य ।
राजा यदा सत्कुरुते मनुष्यं सर्वान्गुणानेष गुणो बिभर्ति ३२
गुणा दश स्नानशीलं भजन्ते बलं रूपं स्वरवर्णप्रशुद्धिः ।
स्पर्शश्च गन्धश्च विशुद्धता च श्रीः सौकुमार्यं प्रवराश्च नार्यः ॥ ३३ ॥
गुणाश्च षण्मितभुक्तं भजन्ते आरोग्यमायुश्च बलं सुखं च ।
अनाविलं[3] चास्य भवत्यपत्यं न चैनमाद्यून इतिक्षिपन्ति ३४
अकर्मशीलं च महाशनं च लोकद्विष्टं बहुमायं नृशंसम् ।
अदेशकालज्ञमनिष्टवेषमेतान्गृहे न प्रतिवासयेत ॥ ३५ ॥
कदर्यमाक्रोशकमश्रुतं[5][6][7] च वनौकसं धूर्तममान्यमानिनम् ।
निष्ठूरिणं[8] कृतवैरं कृतघ्नमेतान्भृशार्तोऽपि न जातु याचेत् ३६
संक्लिष्टकर्माणमतिप्रमादं[9] नित्यानृतं चादृढभक्तिकं च ।
विसृष्टरागं[10] पटुमानिनं चाप्येतान्न सेवेत नराधमान्षट्॥३७॥
सहायबन्धना ह्यर्थाः सहायाश्चार्थबन्धनाः ।
अन्योन्यबन्धनावेतौ विनान्योन्यं न सिध्यतः ॥ ३८ ॥
उत्पाद्य पुत्राननृणांश्च कृत्वा वृत्तिं च तेभ्योनुविधाय कांचित् ।

---

१ लज्जावान्. २ दूरीकृताधिकारः. ३ स्वच्छं आरोग्यादिगुणयुक्तमित्यर्थः. ४ बहुभोजी. ५ कृपणम्. ६ निंदकम्. ७ मूर्खं. ८ निर्दयम्. ९ आततायिनम्. १० त्यक्तस्नेहम्.

स्थाने कुमारीः प्रतिपाद्य सर्वा अरण्यसंस्थोऽथ मुनिर्बुभूषेत्
॥ ३९ ॥

हितं यत्सर्वभूतानामात्मनश्च सुखावहम् ।
तत्कुर्यादीश्वरे ह्येतन्मूलं सर्वार्थसिद्धये ॥ ४० ॥

वृद्धिः प्रभावस्तेजश्च सत्त्वमुत्थानमेव[1] च ।
व्यवसायश्च यस्य स्यात्तस्यावृत्तिभयं कुतः ॥ ४१ ॥

पश्य दोषान्पाण्डवैर्विग्रहे त्वं यत्र व्यथेयुरपि देवाः सशक्राः ।
पुत्रैर्वैरं नित्यमुद्विग्नवासो यशः प्रणाशो द्विषतां च हर्षः ४२

भीष्मस्य कोपस्तव चैवेन्द्रकल्पद्रोणस्य राज्ञश्च युधिष्ठिरस्य ।
उत्सादयेल्लोकमिमं प्रवृद्धः श्वेतो[2] ग्रहस्तिर्यगिवापतन्खे॥४३

तव पुत्रशतं चैव कर्णः पञ्च च पाण्डवाः ।
पृथिवीमनुशासेयुरखिलां सागराम्बराम् ॥ ४४ ॥

धार्तराष्ट्रा वनं राजन् व्याघ्राः पाण्डुसुता मताः ।
मा वनं छिंधि सव्याघ्रं मा व्याघ्रा नीनैशन्[3]वनात् ॥ ४५ ॥

न स्याद्वनमृते व्याघ्रान् व्याघ्रा न स्युर्ऋते वनम् ।
वनं हि रक्ष्यते व्याघ्रैर्व्याघ्रान्रक्षति काननम् ॥ ४६ ॥

न तथेच्छन्ति कल्याणान् परेषां वेदितुं गुणान् ।
यथैषां ज्ञातुमिच्छन्ति नैर्गुण्यं पापचेतसः ॥ ४७ ॥

अर्थसिद्धिं परामिच्छन् धर्ममेवादितश्चरेत् ।
न हि धर्मादपैत्यर्थः स्वर्गलोकादिवामृतम् ॥ ४८ ॥

यस्यात्मा विरतः पापात् कल्याणे च निवेशितः ।
तेन सर्वमिदं बुद्धं प्रकृतिर्विकृतिश्च या ॥ ४९ ॥

---

१ उद्योगः. २ धूमकेतुः. ३ नाशं प्राप्नुयुः.

यो धर्ममर्थं कामं च यथाकालं निषेवते ।
धर्मार्थकामसंयोगं सोऽमुत्रेह च विन्दति ॥ ५० ॥
सन्नियच्छति यो वेगमुत्थितं क्रोधहर्षयोः ।
स श्रियो भाजनं राजन् यश्चापत्सु न मुह्यति ॥ ५१ ॥
बलं पंचविधं नित्यं पुरुषाणां निबोध मे ।
यत्तु बाहुबलं नाम कनिष्ठं बलमुच्यते ॥ ५२ ॥
अमात्यलाभो भद्रं ते द्वितीयं बलमुच्यते ।
तृतीयं धनलाभं तु बलमाहुर्मनीषिणः ॥ ५३ ॥
यत्त्वस्य सहजं राजन् पितृपैतामहं बलम् ।
अभि[1]जातबलं नाम तच्चतुर्थं बलं स्मृतम् ॥ ५४ ॥
येन त्वेतानि सर्वाणि संगृहीतानि भारत ।
यद्बलानां बलं श्रेष्ठं तत्प्रज्ञाबलमुच्यते ॥ ५५ ॥
महते योपकाराय नरस्य प्रभवेन्नरः ।
तेन वैरं समासज्य दूरस्थोस्मीति नाश्वसेत् ॥ ५६ ॥
स्त्रीषु राजसु सर्पेषु स्वाध्यायप्रभुशत्रुषु ।
भोगेष्वायुषि विश्वासं कः प्राज्ञः कर्तुमर्हति ॥ ५७ ॥
प्रज्ञाशरेणाभिहतस्य जन्तोश्चिकित्सकाः सन्ति न चौषधानि ।
न होममन्त्रा न च मङ्गलानि [2]नाथर्वणा नाप्यगदाः सुसिद्धाः ॥ ५८ ॥
सर्पश्चाग्निश्च सिंहश्च कुलपुत्रं[3]श्च भारत ।
नावज्ञेया मनुष्येण सर्वे ह्येतेऽतितेजसः ॥ ५९ ॥
अग्निस्तेजो महल्लोके गूढस्तिष्ठति दारुषु ।

---

१ कुलबलम्. २ अथर्वणवेदोक्ताः मंत्राः. ३ ज्ञातिः.

न चोपयुङ्क्ते तद्दारु यावन्नोद्दीप्यते परैः ॥ ६० ॥
स एव खलु दारुभ्यो यदा निर्मथ्य दीप्यते ।
तद्दारु च वनं चान्यन्निर्दहत्याशु तेजसा ॥ ६१ ॥
एवमेव कुले जाताः पावकोपमतेजसः ।
क्षमावन्तो निराकाराः काष्ठेऽग्निरिव शेरते ॥ ६२ ॥
लताधर्मा त्वं सपुत्रः शालाः पाण्डुसुता मताः ।
न लता वर्धते जातु महाद्रुममनाश्रिता ॥ ६३ ॥
वनं राजंस्तव पुत्रोम्बिकेय सिंहान्वने पाण्डवांस्तात विद्धि ।
सिंहैर्विहीनं हि वनं विनश्येत् सिंहा विनश्येयुर्ऋते वनेन ६४

इति श्रीमहाभारते उद्योगपर्वणि प्रजागरपर्वणि विदुरहितवाक्ये सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

## विदुर उवाच

ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ॥ १ ॥
पीठं दत्वा साधवेभ्यागताय आनीयापः परिनिर्णिज्य पादौ ।
सुखं पृष्ट्वा प्रतिवेद्यात्मसंस्थां ततो दद्यादन्नमवेक्ष्य धीरः ॥ २
यस्योदकं मधुपर्कं च गां च न मन्त्रवित्प्रतिगृह्णाति गेहे ।
लोभाद्भयादथ कार्पण्यतो वा तस्यानर्थं जीवितमाहुरार्याः ३
चिकित्सकः शल्यकर्तावकीर्णी स्तेनः क्रूरो मद्यपो भ्रूणहा च ।
सेनाजीवी श्रुतिविक्रायकश्च भृशं प्रियोप्यतिथिर्नोदकार्हः ॥४

---

१ वृक्षविशेषाः. २ प्रक्षाल्य. ३ आत्मस्थितिम्. ४ नष्टब्रह्मचर्यः. ५ श्रुतिविक्रायकप्रसंगादन्यान्यप्यविक्रेयाण्याह; एतेषां विक्रायकोऽपि.

अविक्रेयं लवणं पक्वमन्नं दधि क्षीरं मधु तैलं घृतं च ।
तिला मांसं फलमूलानि शाकं रक्तं वासः सर्वगन्धा गुडाश्च ५
अरोषणो[1] यः समलोष्टाश्मकांचनः प्रहीणशोको गतसन्धि-
विग्रहः ।
निन्दाप्रशंसोपरतः प्रियाप्रिये त्यजन्नुदासीनवदेष भिक्षुकः ६
नीवारमूलेङ्गुदशाकवृत्तिः सुसंयतात्माग्निकार्येषु चोद्यः[2] ।
वने वसन्नतिथिष्वप्रमत्तो धुरन्धरः पुण्यकृदेष तापसः ॥७॥
अपकृत्य बुद्धिमतो दूरस्थोस्मीति नाश्वसेत् ।
दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति हिंसितः ॥ ८ ॥
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ ९ ॥
अनीर्षुर्गुप्तदारश्च संविभागी[3] प्रियंवदः ।
श्लक्ष्णो मधुरवाक् स्त्रीणां न चासां वशगो भवेत् ॥ १० ॥
पूजनीया महाभागाः पुण्याश्च गृहदीप्तयः ।
स्त्रियः श्रियो गृहस्योक्तास्तस्माद्रक्ष्या विशेषतः ॥ ११ ॥
पितु[4]रन्तःपुरं दद्यान्मातुर्दद्यान्महानसम् ।
गोषु[5] चात्मसमं दद्यात्स्वयमेव कृषिं व्रजेत् ॥ १२ ॥
भृत्यैर्वाणिज्यचारं च पुत्रैः सेवेत च द्विजान् ।
अद्भ्योग्निर्ब्रह्म[6]तः क्षत्रमश्मनो लोहमुत्थितम् ॥ १३ ॥

---

१ दोषवानप्यतिथिः पूज्यः किमुत गुणवानिति गुणानाह. २ विधेयः उद्युक्त इत्यर्थः. ३ संपदो यथायथं विभागकर्ता. ४ संसारभारं स्वयं वहेदित्यर्थः. ५ पशुसंरक्षणार्थमात्मसमं विश्वस्तं नियुंज्यादित्यर्थः. ६ ब्राह्मणापमानं न कुर्यात् क्षत्रिय एव तस्मात्पराजयेत.

तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ।
नित्यं सन्तः कुले जाताः पावकोपमतेजसः ॥ १४ ॥
क्षमावन्तो निराकाराः[1] काष्ठेऽग्निरिव शेरते ।
यस्य मन्त्रं न जानन्ति बाह्याश्चाभ्यन्तराश्च ये ॥ १५ ॥
स राजा सर्वतश्चक्षुश्चिरमैश्वर्यमश्नुते ।
करिष्यन्न प्रभाषेत कृतान्येव तु दर्शयेत् ॥ १६ ॥
धर्मकामार्थकार्याणि तथा मन्त्रो न भिद्यते ।
गिरिपृष्ठमुपारुह्य प्रासादं वा रहोगतः ॥ १७ ॥
अरण्ये निःशलाके वा तत्र मन्त्रोऽभिधीयते ।
नासुहृत्परमं मन्त्रं भारतार्हति वेदितुम् ॥ १८ ॥
अपण्डितो वापि सुहृत् पण्डितो वाप्यनात्मवान्[2] ।
नापरीक्ष्य महीपालः कुर्यात्सचिवमात्मनः ॥ १९ ॥
अमात्ये ह्यर्थलिप्सा च मन्त्ररक्षणमेव च ॥
कृतानि सर्वकार्याणि यस्य पारिषदा विदुः ॥ २० ॥
धर्मे चार्थे च कामे च स राजा राजसत्तमः ॥
गूढमन्त्रस्य नृपतेस्तस्य सिद्धिरसंशयम् ॥ २१ ॥
अप्रशस्तानि कार्याणि यो मोहादनुतिष्ठति ।
स तेषां विपरिभ्रंशाद्भ्रश्यते जीवितादपि ॥ २२ ॥
कर्मणां तु प्रशस्तानामनुष्ठानं सुखावहम् ।
तेषामेवाननुष्ठानं पश्चात्तापकरं मतम् ॥ २३ ॥
अनधीत्य यथा वेदान्न विप्रः श्राद्धमर्हति ।
एवमश्रुतषाड्गुण्यो[3] न मन्त्रं श्रोतुमर्हति ॥ २४ ॥

---

१ तृणैरनावृते. २ चपलवाक्. ३ षण्णां सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाणां गुणानां समूहः षाड्गुण्यं.

स्थानवृद्धिक्षयज्ञस्य षाड्गुण्य[1]विदितात्मनः ।
अनवज्ञात[2]शीलस्य स्वाधीना पृथिवी नृप ॥ २५ ॥
अमोघक्रोधहर्षस्य स्वयं कृत्वान्ववेक्षिणः ।
आत्मप्रत्यय[3]कोशस्य वसुदैव वसुन्धरा ॥ २६ ॥
नाममात्रेण[4] तुष्येत छत्रेण च महीपतिः ।
भृत्येभ्यो विसृजेदर्थान्नैकः सर्वहरो भवेत् ॥ २७ ॥
ब्राह्मणं ब्राह्मणो वेद भर्ता वेद स्त्रियं तथा ।
अमात्यं नृपतिर्वेद राजा राजानमेव च ॥ २८ ॥
न शत्रुर्वशमापन्नो मोक्तव्यो वध्यतां गतः ।
न्यग्भूत्वा पर्युपासीत वध्यं हन्याद्बले सति ।
अहताद्धि भयं तस्माज्जायते न चिरादिव ॥ २९ ॥
दैवतेषु प्रयत्नेन राजसु ब्राह्मणेषु च ।
नियंतव्यः सदा क्रोधो वृद्धबालातुरेषु च ॥ ३० ॥
निरर्थं कलहं प्राज्ञो वर्जयेन्मूढसेवितम् ।
कीर्तिं च लभते लोके न चानर्थेन युज्यते ॥ ३१ ॥
प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः ।
न तं भर्तारमिच्छंति षंढं पतिमिव स्त्रियः ॥ ३२ ॥
न बुद्धिर्धनलाभाय न जाड्यमसमृद्धये ।
लोकपर्याय[5]वृत्तांतं प्राज्ञो जानाति नेतरः ॥ ३३ ॥

---

१ षाड्गुण्याभिज्ञत्वेन प्रसिद्धः आत्मा स्वरूपं यस्य. २ अनिंदितस्वभावस्य. ३ स्वयमेव ज्ञानकोशस्य. ४ नाममात्रेणैव राजा भवेत् भोगांस्तु भृत्यैः समानानेव भुंजीत. ५ लोकस्य पर्यायः इह लोके परलोकवत्त्वं तस्य वृत्तांतं कर्मफलाधीनत्वं न बुद्ध्या धनं जाड्येन दारिद्र्यं वा प्राप्नोति बहुशो व्यभिचारदर्शनादित्यभिप्रायः.

विद्याशीलवयोवृद्धान् बुद्धिवृद्धांश्च भारत ।
धनाभिजातवृद्धांश्च नित्यं मूढोवमन्यते ॥ ३४ ॥
अनार्यवृत्तमप्राज्ञमसूयकमधार्मिकम् ।
अनर्थाः क्षिप्रमायान्ति वाग्दुष्टं क्रोधनं तथा ॥ ३५ ॥

अविसंवादनं[1] दानं समयस्याव्यतिक्रमः[2] ।
आवर्तयन्ति[3] भूतानि सम्यक्प्रणिहिता च वाक् ॥ ३६ ॥
अविसंवादको दक्षः कृतज्ञो मतिमानृजुः ।
अपि सङ्क्षीणकोशोऽपि लभते परिवारणम्[4] ॥ ३७ ॥

धृतिः शमो दमः शौचं कारुण्यं वागनिष्ठुरा ।
मित्राणां चानभिद्रोहः सप्तैताः समिधः[5] श्रियः ॥ ३८ ॥
असंविभागी[6] दुष्टात्मा कृतघ्नो निरपत्रपः ।
तादृङ्नराधिपो लोके वर्जनीयो नराधिप ॥ ३९ ॥

न च रात्रौ सुखं शेते ससर्प इव वेश्मनि ।
यः कोपयति निर्दोषं सदोषोभ्यंतरं जनम् ॥ ४० ॥
येषु दुष्टेषु दोषः स्याद्योगक्षेमस्य भारत ।
सदा प्रसादनं तेषां देवतानामिवाचरेत् ॥ ४१ ॥

येऽर्थाः स्त्रीषु समायुक्ताः[7] प्रमत्तपतितेषु च ।
ये चानार्ये समासक्ताः सर्वे ते संशयं गताः[8] ॥ ४२ ॥
यत्र स्त्री यत्र कितवो बालो यत्रानुशासिता ।
मज्जन्ति तेऽवशा राजन्नद्यामश्मप्लवा इव ॥ ४३ ॥

---

१ अप्रियवचनरहितम्. २ समयस्य मर्यादायाः पालनम्. ३ शत्रूनपि-स्वीयान्कुर्वन्ति. ४ परिवारान् भृत्यमित्रादीन्. ५ उद्दीपकाः. ६ भृत्यादिभ्योऽदत्वा स्वयमेवोपभोक्ता. ७ निहिताः. ८ कदाचिदेव प्राप्याः.

प्रयोजनेषु[1] ये सक्ता न विशेषेषु भारत ।
तानहं पण्डितान्मन्ये विशेषा हि प्रसङ्गिनः[2] ॥ ४४ ॥
यं प्रशंसन्ति कितवा यं प्रशंसन्ति चारणाः ।
यं प्रशंसन्ति बन्धक्यो न स जीवति मानवः ॥ ४५ ॥
हित्वा तान्परमेष्वासान् पाण्डवानमितौजसः ।
आहितं भारतैश्वर्यं त्वया दुर्योधने महत् ॥ ४६ ॥
तं द्रक्ष्यसि परिभ्रष्टं तस्मात्त्वमचिरादिव ।
ऐश्वर्यमदसम्मूढं बलिं लोकत्रयादिव ॥ ४७ ॥

इति श्रीमहाभारते उद्योगपर्वणि प्रजागरपर्वणि
विदुरवाक्ये अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

धृतराष्ट्र उवाच

अनीश्वरोऽयं पुरुषो भवाभवे[3] सूत्रप्रोता दारुमयीव योषा ।
धात्रा तु दिष्टस्य[4] वशे कृतोऽयं तस्माद्वद त्वं श्रवणे
धृतोऽहम् ॥ १ ॥

विदुर उवाच

अप्राप्तकालं वचनं बृहस्पतिरपि ब्रुवन् ।
लभते बुद्ध्यवज्ञानमवमानं च भारत ॥ २ ॥
प्रियो भवति दानेन प्रियवादेन चापरः ।
मंत्रमूलबलेनान्यो यः प्रियः प्रिय एव सः ॥ ३ ॥

---

१ आवश्यकं कार्यमेव कुर्वाणाः नाधिकम्. २ प्रसंगिनः हेतुं विना कार्योत्पादका विशेषा अधिका व्यर्था इत्यर्थः. ३ ऐश्वर्यानैश्वर्ये. ४ दैवस्य.

द्वेष्यो [1]न साधुर्भवति न मेधावी न पंडितः ।
प्रिये शुभा[2]नि कार्याणि द्वेष्ये पापानि चैव ह ॥ ४ ॥
उक्तं मया जातमात्रेऽपि राजन्दुर्योधनं त्यज पुत्रं त्वमेकम् ।
तस्य त्यागात्पुत्रशतस्य वृद्धिरस्यात्यागात्पुत्रशतस्य नाशः॥५॥
न वृद्धिर्बहु मंतव्या या वृद्धिः क्षयमावहेत् ।
क्षयोऽपि बहु मंतव्यो यः क्षयो वृद्धिमावहेत् ॥ ६ ॥
न स क्षयो महाराज यः क्षयो वृद्धिमावहेत् ।
क्षयः स त्विह मंतव्यो यं लब्ध्वा बहु नाशयेत् ॥ ७ ॥
समृद्धा गुणतः केचिद्भवंति धनतोऽपरे ।
धनवृद्धान्गुणैर्हीनान्धृतराष्ट्र विवर्जय ॥ ८ ॥

धृतराष्ट्र उवाच

सर्वं त्वमा[3]यतीयुक्तं भाषसे प्राज्ञसम्मतम् ।
न चोत्सहे सुतं त्यक्तुं यतो धर्मस्ततो जयः ॥ ९ ॥

विदुर उवाच

अतीव गुणसम्पन्नो न जातु विनयान्वितः ।
सुसूक्ष्ममपि भूतानामुपमर्दमुपेक्षते ॥ १० ॥
परापवादनिरताः परदुःखोदयेषु च ।
परस्परविरोधे च यतंते सततोत्थिताः ॥ ११ ॥
सदोषं दर्शनं येषां संवासे सुमहद्भयम् ।
अर्थादाने [4]महान्दोषः प्रदाने च महद्भयम् ॥ १२ ॥

१ यो यस्य द्वेष्यः तस्मिन् विद्यमानान्यपि साधुत्वादीनि तद्दृष्ट्या न संत्येव. २ प्रिये सर्वाणि कार्याणि शोभनान्येव दृश्यंते. ३ आयत्यां उत्तरकाले युक्तं हितकरम्. ४ तैः सह दानादानादि किमपि न कर्तव्यमित्यर्थः.

ये वै भेदनशीलास्तु सकामा निस्त्रपाः शठाः ।
ये पापा इति विख्याताः संवासे परिगर्हिताः ॥ १३ ॥
युक्ताश्चान्यैर्महादोषैर्ये नरास्तान् विवर्जयेत् ।
निवर्तमाने सौहार्दे प्रीतिर्नीचे प्रणश्यति ॥ १४ ॥
या चैव फलनिर्वृत्तिः सौहृदे चैव यत्सुखम् ।
यतते चापवादाय यत्नमारभते क्षये ॥ १५ ॥
अल्पेप्यपकृते मोहान्न शांतिमधिगच्छति ।
तादृशैः संगतं नीचैर्नृशंसैरकृतात्मभिः ॥ १६ ॥
निशम्य निपुणं बुध्वा विद्वान्दूराद्विवर्जयेत् ।
यो ज्ञातिमनुगृह्णाति दरिद्रं दीनमातुरम् ॥ १७ ॥
स पुत्रपशुभिर्वृद्धिं श्रेयश्चानन्त्यमश्नुते ।
ज्ञातयो वर्धनीयास्तैर्य इच्छन्त्यात्मनः शुभम् ॥ १८ ॥
कुलवृद्धिं च राजेन्द्र तस्मात्साधु समाचर ।
श्रेयसा योक्ष्यते राजन् कुर्वाणो ज्ञातिसत्क्रियाम् ॥ १९ ॥
विगुणा ह्यपि संरक्ष्या ज्ञातयो भरतर्षभ ।
किं पुनर्गुणवन्तस्ते त्वत्प्रसादाभिकाङ्क्षिणः ॥ २० ॥
प्रसादं कुरु वीराणां पाण्डवानां विशाम्पते ।
दीयंतां ग्रामकाः केचित्तेषां वृत्त्यर्थमीश्वर ॥ २१ ॥
एवं लोके यशः प्राप्तं भविष्यति नराधिप ।
वृद्धेन हि त्वया कार्यं पुत्राणां तात शासनम् ॥ २२ ॥
मया चापि हितं वाच्यं विद्धि मां त्वद्धितैषिणम् ।

---

१ सौहार्दे मित्रत्वे नष्टे प्रीतिः, मित्रत्वमूला फलप्राप्तिः सुखं च नश्यति, सः निंदायै क्षयाय च प्रवर्तते इति द्वयोः सम्बन्धः.

ज्ञातिभिर्विग्रहस्तात न कर्तव्यः शुभार्थिना ।
सुखानि सह भोज्यानि ज्ञातिभिर्भरतर्षभ ॥ २३ ॥
सम्भोजनं सङ्कथनं सम्प्रीतिश्च परस्परम् ।
ज्ञातिभिः सह कार्याणि न विरोधः कदाचन ॥ २४ ॥
ज्ञातयस्तारयन्तीह ज्ञातयो मज्जयन्ति च ।
सुवृत्तास्तारयन्तीह दुर्वृत्ता मज्जयन्ति च ॥ २५ ॥
सुवृत्तो भव राजेन्द्र पाण्डवान्प्रति मानद ।
अधर्षणीयः शत्रूणां तैर्वृतस्त्वं भविष्यसि ॥ २६ ॥
श्रीमन्तं ज्ञातिमासाद्य यो ज्ञातिरवसीदति ।
दिग्धहस्तं[1] मृग इव स एनस्तस्य विन्दति ॥ २७ ॥
पश्चादपि नरश्रेष्ठ तव तापो भविष्यति ।
तान्वा हतान्सुतान्वापि श्रुत्वा तदनुचिन्तय ॥ २८ ॥
येन खट्वां[2] समारूढः परितप्येत कर्मणा ।
आदावेव न तत्कुर्यादध्रुवे जीविते सति ॥ २९ ॥
न कश्चिन्नापनयते[3] पुमानन्यत्र भार्गवात् ।
शेषसम्प्रतिपत्तिस्तु बुद्धिमत्स्वेव तिष्ठति ॥ ३० ॥
दुर्योधनेन यद्येतत्पापं तेषु पुरा कृतम् ।
त्वया तत्कुलवृद्धेन प्रत्यानेयं[4] नरेश्वर ॥ ३१ ॥

---

१ दिग्धः विषाक्तबाणः हस्ते यस्य एतादृशं व्याधम्, यथा व्याधेन मृगो हन्यते तथा अवसन्नज्ञातेः पापेन श्रीमान् ज्ञातिः पीड्यते इत्यभिप्रायः. २ खट्वां समारूढः चिन्तागारं प्रविष्टः. ३ भार्गवात् शुक्राचार्यात् नीतिशास्त्रकर्तुर्विना कश्चिन्न अनीतिं करोति इति न किं तु सर्वोप्यनीतिं करोति अतः यद्गतं तद्गतमेव परमत ऊर्ध्वं अनीत्यकरणे यत्नः कार्य इत्यर्थः. ४ प्रतिकर्तव्यम् ।

तांस्त्वं पदे प्रतिष्ठाप्य लोके विगतकल्मषः ।
भविष्यसि नरश्रेष्ठ पूजनीयो मनीषिणाम् ॥ ३२ ॥

सुव्याहृतानि[1] धीराणां फलतः परिचिन्त्य यः ।
अध्यवस्यति कार्येषु चिरं यशसि तिष्ठति ॥ ३३ ॥

असम्यगुपयुक्तं हि ज्ञानं सुकुशलैरपि[2] ।
उपलभ्यं चाविदितं विदितं चाननुष्ठितम् ॥ ३४ ॥

पापोदयफलं[3] विद्वान्यो नारभति वर्धते ।
यस्तु पूर्वकृतं पापं[4] मविमृश्यानुवर्तते ।
अगाधपङ्के[5] दुर्मेधा विषमे विनिपात्यते ॥ ३५ ॥

मन्त्रभेदस्य षट् प्राज्ञो द्वाराणीमानि लक्षयेत् ।
अर्थसन्ततिकामस्तु[6] रक्षेदेतानि नित्यशः ॥ ३६ ॥

मदं स्वप्नमविज्ञान[7]माकारं[8] चात्मसम्भवम् ।
दुष्टामात्येषु विश्रम्भं दूताच्चाकुशलादपि ॥ ३७ ॥

द्वाराण्येतानि यो ज्ञात्वा संवृणोति[9] सदा नृप ।
त्रिवर्गाचरणे युक्तः स शत्रूनधितिष्ठति ॥ ३८ ॥

न वै श्रुतम[10]विज्ञाय वृद्धाननुपसेव्य वा ।
धर्माथौ वेदितुं शक्यौ बृहस्पतिसमैरपि ॥ ३९ ॥

---

१ वचनानि. २ सुकुशलैः पण्डितैरुपयुक्तं उपदिष्टमपि ज्ञानं असम्यक् व्यर्थमेव यदि उपलभ्यं ज्ञेयं अविदितं न ज्ञातं अथवा ज्ञातमपि नाचरितम्. ३ कर्मेति शेषः. ४. अविचार्य पापमेवानुवर्तते सततं करोति. ५ नरके. ६ सम्पद्वृद्धिः कामो इच्छा यस्य. ७ परकीयगुप्तचारादेरज्ञानम्. ८ आत्मनः नेत्रवक्त्रविकारादि तेन परदूता मंत्रं तर्कयंति. ९ मंत्रभेदस्य द्वाराणि संवृणोति पिदधाति. १० श्रुतं शास्त्रम्.

नष्टं समुद्रे पतितं नष्टं वाक्यमशृण्वति ।
अनात्मनि श्रुतं नष्टं नष्टं हुतमनग्निकम् ॥ ४० ॥
मत्या परीक्ष्य मेधावी बुद्ध्या सम्पाद्य चासकृत् ।
श्रुत्वा दृष्ट्वाथ विज्ञाय प्राज्ञैर्मैत्रीं समाचरेत् ॥ ४१ ॥
अकीर्तिं विनयो हन्ति हन्त्यनर्थं पराक्रमः ।
हन्ति नित्यं क्षमा क्रोधमाचारो हन्त्यलक्षणम् ॥ ४२ ॥
परिच्छदेन[1] क्षेत्रेण वेश्मना परिचर्यया ।
परीक्षेत कुलं राजन् भोजनाच्छादनेन च ॥ ४३ ॥
उपस्थितस्य कामस्य प्रतिवादो न विद्यते ।
अपि निर्मुक्तदेहस्य कामरक्तस्य किं पुनः ॥ ४४ ॥
प्राज्ञोपसेविनं वैद्यं[2] धार्मिकं प्रियदर्शनम् ।
मित्रवन्तं सुवाक्यं च सुहृदं परिपालयेत् ॥ ४५ ॥
दुष्कुलीनः कुलीनो वा मर्यादां यो न लङ्घयेत् ।
धर्मापेक्षी मृदुर्ह्रीमान् स कुलीनशताद्वरः ॥ ४६ ॥
ययोश्चित्तेन वा चित्तं निभृतं[3] निभृतेन वा ।
समेति प्रज्ञया प्रज्ञा तयोर्मैत्री न जीर्यति[4] ॥ ४७ ॥
दुर्बुद्धिमकृतप्रज्ञं छन्नं कूपं तृणैरिव ।
विवर्जयीत मेधावी तस्मिन्मैत्री प्रणश्यति ॥ ४८ ॥
अवलिप्तेषु मूर्खेषु रौद्रसाहसिकेषु[5] च ।
तथैवापेतधर्मेषु न मैत्रीमाचरेद्बुधः ॥ ४९ ॥
कृतज्ञं धार्मिकं सत्यमक्षुद्रं दृढभक्तिकम् ।
जितेन्द्रियं स्थितं स्थित्यां मित्रमत्यागि चेष्यते ॥ ५० ॥

---

१ परिच्छदः भोग्यवस्तुसामग्री. २ विद्यावन्तम्. ३ निभृतं गुप्तं मंत्रादि. ४ न क्षीयते. ५ रौद्राः कोपनाः साहसिका अविमृश्यकारिणः.

इन्द्रियाणामनु[१]त्सर्गो मृत्युनापि विशिष्यते ।
अत्यर्थं पुनरुत्सर्गः साद[२]येद्दैवतानपि ॥ ५१ ॥
मार्दवं सर्वभूतानामनसूया क्षमा धृतिः ।
आयुष्याणि बुधाः प्राहुर्मित्राणां चाविमानना ॥ ५२ ॥
अप[३]नीतं सुनीतेन योऽर्थं प्रत्यानिनीषते ।
मतिमास्थाय सुदृढां तदकापुरुषव्रतम् ॥ ५३ ॥
आयत्यां प्रतिकारज्ञस्त[४]दात्वे दृढनिश्चयः ।
अतीते कार्यशेषज्ञो नरोर्थैर्न प्रहीयते ॥ ५४ ॥
कर्मणा मनसा वाचा यदभीक्ष्णं निषेवते ।
तदेवापहरत्येनं तस्मात्कल्याणमाचरेत् ॥ ५५ ॥
मङ्गलालम्भनं योगः श्रुतमुत्थानमार्जवम् ।
भूतिमेतानि कुर्वन्ति सतां चाभीक्ष्णदर्शनम् ॥ ५६ ॥
अनिर्वेदः श्रियो मूलं लाभस्य च शुभस्य च ।
महान्भवत्यनिर्विण्णः सुखं चानन्त्यमश्नुते ॥ ५७ ॥
नातः श्रीमत्तरं किंचिदन्यत्पथ्यतमं मतम् ।
प्रभविष्णोर्यथा तात क्षमा सर्वत्र सर्वथा ॥ ५८ ॥
क्षमेदशक्तः सर्वस्य शक्तिमान्धर्मकारणात् ।
अर्थानर्थौ समौ यस्य तस्य नित्यं क्षमा हिता ॥ ५९ ॥
यत्सुखं सेवमानोऽपि धर्मार्थाभ्यां न हीयते ।
कामं तदुपसेवेत न मू[५]ढव्रतमाचरेत् ॥ ६० ॥
दुःखार्तेषु प्रमत्तेषु नास्तिकेष्वलसेषु च ।
न श्रीर्वसत्यदान्तेषु ये चोत्साहविवर्जिताः ६१ ॥

---

१ उत्सर्गः विषयेषु प्रवृत्तिः अनुत्सर्गः निवृत्तिः सा मृत्युतुल्यैव. २ नाशयेत्. ३ अन्यायेन नाशितम्. ४ वर्तमाने. ५ सर्वथा आहारादित्यागो न कार्यः.

आर्जवेन नरं युक्तमार्जवात्[1]सव्यपत्रपम् ।
अशक्तं मन्यमानास्तु धर्षयन्ति कुबुद्धयः ॥ ६२ ॥
अत्यार्यमतिदातारमतिशूरमतिव्रतम् ।
प्रज्ञाभिमानिनं चैव श्रीर्भयान्नोपसर्पति ॥ ६३ ॥
न चातिगुणवस्त्वेषा नात्यंतं निर्गुणेषु च ।
नैषा गुणान्कामयते नैर्गुण्यान्नानुरज्यते ॥ ६४ ॥
उन्मत्ता गौरिवान्धा श्रीः क्वचिदेवावतिष्ठते ।
अग्निहोत्रफला वेदाः शीलवृत्तफलं श्रुतम् ॥ ६५ ॥
रतिपुत्रफला नारी दत्तभुक्तफलं धनम् ।
अधर्मोपार्जितैरर्थैर्यः करोत्यौर्ध्वदेहि[2]कम् ॥ ६६ ॥
न स तस्य फलं प्रेत्य भुङ्क्तेऽर्थस्य दुरागमात् ।
कान्तारे वनदुर्गेषु कृच्छ्रास्वापत्सु सम्भ्रमे ॥ ६७ ॥
उद्यतेषु च शस्त्रेषु नास्ति सत्त्ववतां भयम् ।
उत्थानं संयमो दाक्ष्यमप्रमादो धृतिः स्मृतिः ।
समीक्ष्य च समारम्भो विद्धि मूलं [3]भवस्य तु ॥ ६८ ॥
तपो बलं तापसानां ब्रह्म ब्रह्मविदां बलम् ।
हिंसा बलमसाधूनां क्षमा गुणवतां बलम् ॥ ६९ ॥
अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥ ७० ॥
न तत्परस्य संदध्यात्प्रतिकूलं यदात्मनः ।
सङ्ग्रहेणैष धर्मः स्यात्कामादन्यैः[4] प्रवर्तते ॥ ७१ ॥

---

१ सव्यपत्रपं सलज्जं योग्यकाले एव आर्जवं धार्यमित्यर्थः. २ परलोकसाधनं यज्ञादि. ३ ऐश्वर्यस्य. ४ अन्यो धर्मः सकामः अयं तु निष्काम इत्यर्थः.

अक्रोधेन जयेत्क्रोधमसाधुं साधुना जयेत् ।
जयेत्कदर्यं दानेन जयेत्सत्येन चानृतम् ॥ ७२ ॥
स्त्रीधूर्तकेऽलसे[1] भीरौ चण्डे पुरुषमानिनि ।
चौरे कृतघ्ने विश्वासो न कार्यो न च नास्तिके ॥ ७३ ॥
अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि सम्प्रवर्धन्ते कीर्तिरायुर्यशो बलम् ॥ ७४ ॥
अतिक्लेशेन येऽर्थाः स्युर्धर्मस्यातिक्रमेण वा ।
अरेर्वा प्रणिपातेन मास्म तेषु मनः कृथाः ॥ ७५ ॥
अविद्यः पुरुषः शोच्यः शोच्यं मैथुनमप्रजम् ।
निराहाराः प्रजाः शोच्याः शोच्यं राष्ट्रमराजकम् ॥ ७६ ॥
अध्वा जरा देहवतां पर्वतानां जलं जरा ।
असम्भोगो जरा स्त्रीणां वाक्शल्यं मनसो जरा ॥ ७७ ॥
अनाम्नाय[2]मला वेदा ब्राह्मणस्याव्रतं मलम् ॥ ७८ ॥
मलं पृथिव्या बाह्लीकाः[3] पुरुषस्यानृतं मलम् ।
कौतूहलमला साध्वी विप्रवास[4]मलाः स्त्रियः ॥ ७९ ॥
सुवर्णस्य मलं रूप्यं रूप्यस्यापि मलं त्रपु ।
ज्ञेयं त्रपुमलं सीसं सीसस्यापि मलं मलम् ॥ ८० ॥
न स्वप्नेन जयेन्निद्रां न कामेन जयेत्स्त्रियः ।
नेन्धनेन जयेदग्निं न पानेन सुरां जयेत् ॥ ८१ ॥
यस्य दानजितं मित्रं शत्रवो युधि निर्जिताः ।
अन्नपानजिता दाराः सफलं तस्य जीवितम् ॥ ८२ ॥

---

१ स्त्री च धूर्तकश्चेति समाहारद्वंद्वः. २ अनभ्यासः. ३ देशविशेषाः. ४ प्रवासः परगृहादिवासश्च.

सहस्रिणोपि जीवन्ति जीवन्ति शतिनस्तथा ।
धृतराष्ट्र विमुञ्चेच्छां न कथञ्चिन्न जीव्यते ॥ ८३ ॥
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
नालमेकस्य तत्सर्वमिति पश्यन्न मुह्यति ॥ ८४ ॥
राजन्भूयो ब्रवीमि त्वां पुत्रेषु सममाचर ।
समता यदि ते राजन् स्वेषु पाण्डुसुतेषु वा ॥ ८५ ॥

इति श्रीमहाभारते उद्योगपर्वणि प्रजागरपर्वणि विदुरवाक्ये एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

योऽभ्यर्चितः सद्भिरसज्जमानः करोत्यर्थं शक्तिमहापयित्वा ।
क्षिप्रं यशस्तं समुपैति सन्तमलं प्रसन्ना हि सुखाय सन्तः १
महान्तमप्यर्थमधर्मयुक्तं यः सन्त्यजत्यनपाकृष्ट एव ।
सुखं सुदुःखान्यवमुच्य शेते जीर्णां त्वचं सर्प इवावमुच्य २
अनृते च समुत्कर्षो राजगामि च पैशुनम् ।
गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया ॥ ३ ॥
असूयैकपदं मृत्युरतिवादः श्रियो वधः ।
अशुश्रूषा त्वरा श्लेषा विद्यायाः शत्रवस्त्रयः ॥ ४ ॥
आलस्यं मदमोहौ च चापलं गोष्टिरेव च ।
स्तब्धता चाभिमानित्वं तथात्यागित्वमेव च ॥ ५ ॥
एते वै सप्त दोषाः स्युः सदा विद्यार्थिनां मताः ।
सुखार्थिनः कुतो विद्या नास्ति विद्यार्थिनः सुखम् ॥ ६ ॥
सुखार्थी वा त्यजेद्विद्यां विद्यार्थी वा त्यजेत्सुखम् ।

---

१ पर्याप्तम्. २ अभिमानशून्यः. ३ शक्तिमनतिक्रम्य. ४ संतः प्रसन्नाश्चेत् सुखाय सुखं दातुं अलं समर्था इत्यर्थः. ५ परैरपराजितोपि. ६ लुब्धत्वम्.

नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचना ॥ ७ ॥
आशा धृतिं हन्ति समृद्धिमन्तकः क्रोधः श्रियं हन्ति यशः कदर्यता ॥
अपालनं हन्ति पशूंश्च राजन्नेकः क्रुद्धो ब्राह्मणो हन्ति राष्ट्रम् ॥ ८ ॥
अजाश्च कांस्यं रजतं च नित्यं मध्वाकर्षः शकुनिः श्रोत्रियश्च ।
वृद्धो ज्ञातिरवसन्नः कुलीन एतानि ते सन्तु गृहे सदैव ॥९॥
अजोक्षा चन्दनं वीणा आदर्शो मधुसर्पिषी ।
विषमौदुम्बरं शङ्खः स्वर्णनाभोथ रोचना ॥ १० ॥
गृहे स्थापयितव्यानि धन्यानि मनुरब्रवीत् ।
देवब्राह्मणपूजार्थमतिथीनां च भारत ॥ ११ ॥
इदं च त्वां सर्वपरं ब्रवीमि पुण्यं पदं तात महाविशिष्टम् ।
न जातु कामान्न भयान्न लोभाद्धर्मं जह्याज्जीवितस्यापि हेतोः ॥ १२ ॥
नित्यो धर्मः सुखदुःखे त्वनित्ये जीवो नित्यो हेतुरस्य त्वनित्यः।
त्यक्त्वा नित्यं प्रतितिष्ठस्व नित्यं सन्तुष्य त्वं तोषपरो हि लाभः ॥ १३ ॥
महाबलान्पश्य महानुभावान्प्रशास्य भूमिं धनधान्यपूर्णाम् ॥
राज्यानि हित्वा विपुलांश्च भोगान् गतान्नरेन्द्रान्वशमन्तकस्य ॥ १४ ॥
मृतं पुत्रं दुःखपुष्टं मनुष्या उत्क्षिप्य राजन् स्वगृहान्निर्हरन्ति ॥
तं मुक्तकेशाः करुणं रुदन्ति चितामध्ये काष्ठमिव क्षिपन्ति १५

अन्यो धनं प्रेतगतस्य भुङ्क्ते वयांसि चाग्निश्च शरीरधातून् ।
द्वाभ्यामयं सह गच्छत्यमुत्र पुण्येन पापेन च वेष्ट्यमानः १६
उत्सृज्य विनिवर्तन्ते ज्ञातयः सुहृदः सुताः ॥
अपुष्पानफलान्वृक्षान् यथा तात पतत्रिणः ॥ १७ ॥
अग्नौ प्रास्तं तु पुरुषं कर्मान्वेति स्वयंकृतम् ।
तस्मात्तु पुरुषो यत्नाद्धर्मं सञ्चिनुयाच्छनैः ॥ १८ ॥
अस्माल्लोकादूर्ध्वममुष्य चाधो महत्तमस्तिष्ठति ह्यंधकारम् ।
तद्वै महामोहनमिन्द्रियाणां बुध्यस्व मा त्वां प्रलभेत राजन् ॥ १९ ॥
इदं वचः शक्ष्यसि चेद्यथावन्निशम्य सर्वं प्रतिपत्तुमेव ।
यशः परं प्राप्स्यसि जीवलोके भयं न चामुत्र न चेह तेऽस्ति२०
आत्मा नदी भारत पुण्यतीर्था सत्योदका धृतिकूला दयोर्मिः ।
तस्यां स्नातः पूयते पुण्यकर्मा पुण्यो ह्यात्मा नित्यमलोभ एव ॥ २१ ॥
कामक्रोधग्राहवतीं पञ्चेन्द्रियजलां नदीम् ।
नावं धृतिमयीं कृत्वा जन्मदुर्गाणि सन्तर ॥ २२ ॥
प्रज्ञावृद्धं धर्मवृद्धं स्वबन्धुं विद्यावृद्धं वयसा चापि वृद्धम् ।
कार्याकार्ये पूजयित्वा प्रसाद्य यः सम्पृच्छेन्न स मुह्येत्कदाचित् ॥ २३ ॥
धृत्या[2] शिश्नोदरं रक्षेत्पाणिपादं[3] च चक्षुषा ।
चक्षुःश्रोत्रे च मनसा[4] मनो वाचं च कर्मणा ॥ २४ ॥

---

१ ज्ञातुम्. २ कामं अशनायां च धैर्येण जित्वा दोषात् रक्षेत्. ३ सम्यग्दृष्ट्वा वस्तूनामादानेन दृष्टिपूतस्थले पदन्यासेन. ४ मनसैव परस्त्र्यादिभ्यः कुशब्देभ्यश्च व्यावर्तनेन.

नित्योदकी नित्ययज्ञोपवीति नित्यस्वाध्यायी पतितान्नवर्जी ।
सत्यं ब्रुवन्गुरवे कर्म कुर्वन्न ब्राह्मणश्च्यवते ब्रह्मलोकात् २५
अधीत्य वेदान्परिसंस्तीर्य चाग्नीनिष्ट्वा यज्ञैः पालयित्वा प्रजाश्च ।
गोब्राह्मणार्थे शस्त्रपूतान्तरात्मा हतः सङ्ग्रामे क्षत्रियः स्वर्ग-
मेति ॥ २६ ॥
वैश्योधीत्य ब्राह्मणान्क्षत्रियांश्च धनैः काले संविभज्याश्रितांश्च ।
त्रेतापूतं धूममाघ्राय पुण्यं प्रेत्य स्वर्गे दिव्यसुखानि भुङ्क्ते २७
ब्रह्मक्षत्रं वैश्यवर्णं च शूद्रः क्रमेणैतान्न्यायतः पूजयानः ।
तुष्टेष्वेतेष्वव्यथो दग्धपापस्त्यक्त्वा देहं स्वर्गसुखानि भुङ्क्ते २८
चातुर्वर्ण्यस्यैष धर्मस्तवोक्तो हेतुं चानुब्रुवतो मे निबोध ।
क्षात्राद्धर्माद्धीयते पाण्डुपुत्रस्तं त्वं राजन् राजधर्मे नियु-
ङ्क्ष्व ॥ २९ ॥

॥ धृतराष्ट्र उवाच ॥

एवमेतद्यथा त्वं मामनुशाससि नित्यदा ।
ममापि च मतिः सौम्य भवत्येवं यथात्थ माम् ॥ ३० ॥
सा तु बुद्धिः कृताप्येवं पाण्डवान्प्रति मे सदा ।
दुर्योधनं समासाद्य पुनर्विपरिवर्तते ॥ ३१ ॥
न दिष्टमभ्यतिक्रान्तुं शक्यं भूतेन केनचित् ।
दिष्टमेव ध्रुवं मन्ये पौरुषं तु निरर्थकम् ॥ ३२ ॥

इति श्रीमहाभारते उद्योगपर्वणि प्रजागरपर्वणि विदुरवाक्ये चत्वारिंशोऽध्यायः ॥ ४० ॥

॥ समाप्ता विदुरनीतिः ॥

---

१ नित्यं यथाकालं स्नानादिकर्ता. २ अग्नित्रयम्. ३ प्रजापालनादिरूपात्.